९४

डाः[1] पान्थनखंपचाः प्रचयिनो गन्त्रीपथे पांशवः
कासारोदरशेषमम्बु महिषो मथ्नाति ताम्यत्तिमि ।
†हृष्टिर्धावति धातकीवनमसूक्तर्षेण†[3] तारक्षवी
कण्ठान् बिभ्रति विष्करा: शरशमीनीडेषु नाडींधमान् ॥

बाणस्यौभौ ॥

९५

सुभगसलिलावगाहाः पाटलिसंसर्गसुरभिवनवाताः । *Śakuntalā* 3.
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥

कालिदासस्य ॥

९६

अये तप्तजला नितान्तशिशिरा मूले मुहुर्बाहुभि
र्व्यामथ्योपरतप्रियेषु पथिकैर्मार्गेषु मध्यंदिने ।
आधाराः प्लुतबालशैवलदलच्छेदा[व]कीर्णोर्मयः
पीयन्ते हलमुक्तमग्नमहिषप्रक्षोभपर्याविलाः ॥

योगेश्वरस्य ॥

९७

मृद्धूयिष्ठतया गुरून् परिहरन्नारण्यकान् गोमयान्
वल्मीकानुपगूहति प्रशिथिलं ज्वालाभिरुद्बल्वजान् ।
वह्नि†मीतं†किलिञ्जसंचयसमुत्सिक्तश्चरन् कानने
प्रत्निग्धानिह विष्किराण्डकललानाज्याशया लुम्पति ॥

तस्यैव ॥

---

९४ [1] Read वाताः ? [2] MS. ष्णो. [3] Read गृष्टि (or सृष्टि)
. . . सूक्तर्षेण ?
९६ [1] MS. ला. [2] MS. चद्दि.
९७ [1] MS. मु or सु ? [2] MS. ॰मींड ? For लीढ ?

९८

दूरीभूतशरारि विक्लवबकं .[1] कान्तकारण्डवं
क्लाम्यत्कङ्कमचक्रवाकममिलन्मद्गुप्रपातप्लवम्[2] ।
क्लिष्टक्रौञ्चमधार्तराष्ट्रमपतत्कोयष्टि[4] निष्टीटिभं
सीदत्सारसमप्रसक्तकुररं कालेन जातं (fol. 20a)सरः ॥

तस्यैव ॥[5]

९९

*Skm. II. 787 (मधुरशीलस्य)

तोयोत्तीर्णाः[1] श्रयति कवरीः शेखरः सप्तलानां
शैत्यं सिञ्चत्युपरि कुचयोः पाटलाकण्ठदाम ।
कान्तं कर्णावभिनिविशते कोमलाग्रं शिरीषं
स्त्रीणामङ्गे विभजति तपस्तत्र[2] तत्रात्मचिह्नम् ॥

मधुशीलस्य ॥

१००

शुकपक्षहरितकोमलकुसुमसटानां शिरीषयष्टीनाम् ।
तलमाश्रयति दिनातपभयेन परिपिण्डितं शैत्यम् ॥

वागुरस्य ॥

१०१

Viddhaś. IV. 4. *Skm. II. 794.

हरन्ति[1] हृद्यानि यच्छवणशीतला वेणवो
यदर्घति[2] करम्बिता शिशिरवारिणा[3] वारुणी ।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशां[4]
शुचेरुपरि[5] संस्थितो रतिपतेः प्रसादो गुरुः ॥

---

९८ [1] One akṣara lost; read प्रक्रान्त or निष्क्रान्त? [2] MS. व. [3] MS. ष्टे. [4] MS. को. [5] The words सरः . . . व aro inserted above l. 1 of 20a.

९९ [1] Skm. °त्तीर्णा . . कवरी शेखरं. [2] MS. य.

१०१ [1] Corrected from हार or हरि. [2] Viddhaś. र्द्द and र्चे. [3] Viddhaś. also °वायुना. [4] Viddhaś. also श्री. [5] Viddhaś. रु.

१०२

जलार्द्रा[1] संव्यानं[2] बिसकिसलयैः कै[3]लिवलयाः — *Viddhaś.* IV.3.
शिरीषैरुत्तंसो[4] विचकिलमयी हार[5]रचना ।
शुचा[6]वेणाक्षीणां मलयजरसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥

१०३

रजनिवि[1]रमयामेष्वादि[2]शन्ती रतेच्छां — *Viddhaś.* IV.2.
किमपि कठिनयन्ती नारिके[3]लीफलाम्भः ।
अपि[4] परिणमयित्री राजरम्भाफलानां
दिनपरिणतिरम्या[5] वर्तते ग्रीष्म[6]लक्ष्मीः ॥

एते राजशेखरस्य ॥

१०४

अम्भोधे[1]र्जलयन्त्रमन्द्[2]रपरिस्पन्दे ऽपि निद्राणयोः — *Skm. II. 784 (कस्यचित्).
श्रीनारायणयोर्घनं विघटयत्यूष्मा समालिङ्गनम् ।
किं चोत्तप्तविय (fol. 20b) त्कपालफलके कङ्कालशेषश्रियं
चन्द्रं मर्मरयन्ति पर्प[3]टमिति[4] क्रूरा रवे[5]रंशवः ॥

नारायणलच्छेः ॥

---

१०२ [1] *Viddhaś.* also द्रं. [2] *Viddhaś.* also ग्रष्माणां. [3] MS. कै. [4] *Viddhaś.* सा. [5] MS. च. [6] MS. धा.

१०३ [1] *Viddhaś.* च. [2] MS. स. [3] *Viddhaś.* also नालिकेरी. [4] *Viddhaś.* also यि. [5] *Viddhaś.* °भोग्या and °योग्या. [6] ष्म; the akṣara is partly lost.

१०४ [1] *Skm.* धि. [2] MS. न्द्रि. [3] MS. र्पं. [4] *Skm.* पर्पटवर् or वक. [5] MS. °रङ्श.

## ॥ प्रावृड्व्रज्या ॥

१०५

*Mālatīm.* IX. 14.

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जा[1]लकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥

१०६

*Mālatīm.* IX. 23.

फलभरपरिणामश्यामजम्बूनिकुञ्ज
स्खलिततनुतरङ्गामुत्तरेण [1]स्रवन्तीम्[2] ।
उपरि विघटमानं[3]प्रौ[4]ढतापिच्छनीलः
श्रयति शिखरमद्रेर्नू[5]तनस्तोयवाहः ॥

१०७

*Mālatīm.* IX. 15.

जृम्भाजर्जरडिम्ब[डम्ब]रघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कुन्दलका[1]न्तकेतकभृतः कच्छाः सरित्स्रोतसा
मावि[2]र्गन्धशिलीन्ध्र[3]लोध्रकुसुमस्मेरा वनानां ततिः ॥

---

१०५ [1] MS. ह्वा.

१०६ [1] *Mālatīm.* स्र. [2] MS. न्तीः. [3] *Mālatīm.* ॰मानः and उपचितघनमाल. [4] MS. प्रो. [5] MS. नू.

१०७ [1] MS. भा. [2] *Mālatīm.* माविर्भूत; MS. मानवि॰ with न deleted. [3] MS. न्ध्र.

१०८

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझंझामरु[1] *Mālatīm.* IX. 16.
त्प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः[2]।
धारासिक्तवसुंधरासुरभयः[3] प्राप्तास्त एते ऽधुना[5]
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः[4] ॥

भवभूतेरमी ॥

१०९

एणी याति विलोक्य बालशलभान् शष्पाङ्कुरादित्सया
च्छत्त्रीकुड्मलकानि[2] रक्षति चिराद्दण्डभ्रमात्कुक्कुटी[1]।
धूत्वा धावति कृष्णकीटप(fol. 21a)टलश्रेणी[3] शिखण्डी शिरो
दूराद्देव[4] वनान्तरे विषधरग्रासाभिलाषातुरः ॥

११०

आसारान्तमृदुप्रवृत्तमरुतो मेघोपलिप्ताम्बरा[1] *Skm. II. 826 (कस्यचित्).
विद्युत्पातमुहूर्तदृष्टककुभः सुप्तेन्दुताराग्रहाः[2]।
धाराक्लिन्नकदम्बसंभृतसुरामोदोद्वहाः[3] प्रोषिते
निःसंपातविसारिदर्दुररवा नीताः कथं रात्रयः[4] ॥

योगेश्वरस्य ॥

१११

दात्यूहध्वनिभाञ्जि वेतसशिखासुप्तोरगाणि ध्वन *Skm. II. 816 (योगेश्वरस्य).
त्कादम्बानि कुरङ्ग[1]यूथकलितस्तूपान्युदम्भांसि[2] च[3]।

---

१०८ [1] MS. र्जं. [2] MS. यौ. [3] *Mālatīm.* also झञ्झानिल. [4] *Mālatīm.* also °वलय. [5] *Mālatīm.* also त एवाधुना.

१०९ [1] MS. ता. [2] MS. °चीकुश. [3] MS. प. [4] MS. च.

११० [1] Corrected from म्बा. [2] MS. मू. [3] *Skm.* °संभृत-सुधा; MS. सम्बृ°. [4] *Skm.* also क्षौ (A.).

१११ [1] MS. तु or त्त. [2] MS. ञ्ज. [3] MS. °म्भान्सि.

तीराण्यद्य पिपीलिकासमुदयावर्जज्जटालोलप
व्याघ्रान्युन्मदकुक्कुभानि सरितां कुर्वन्ति लोलं मनः ॥

११२

कान्तां क्वापि विलम्बिनीं कलरुतैराहूय [चेत[1]]स्ततो
दिग्भागानवलोक्य रङ्गवसुधामुत्सृज्य पं[2]ङ्क्तां ततः ।
एष स्फारमृदङ्गनादमधुरैरम्भोमुचामारवै
बै[3]र्हश्रेणिकृतातपत्त्र[4]रचनो हृष्टः शिखी नृत्यति ॥

११३

पीताम्भःस्तिमिताः सृजन्ति सलिलान्याबद्धधारं घना
स्तद्धाराध्वनिमीलितानि नयनान्यभ्येति निद्रागमः ।
निद्रामुद्रि[1]तलोचने प्रतिगृहं मूकायमाने जने
निर्द्वन्द्वोच्चरदुच्चदर्दुररवैः कोलाहलिन्यो निशाः ॥

११४

धारानि[पात[1]]रवबोधितपञ्जरस्थ
दात्यूहडम्बरकरम्बितकण्ठकूजाः ।
श्लिष्टेषु काण्डपटवारितशी[2]करेषु
धन्याः पिबन्ति मुखतामरसं वधूनाम् ॥

११५

शैलश्रेणि[1]रपेतदावदहना द (fol. 21b) . . .[2] †टधनं[3]†
जीमूताङ्कुरदन्तुरा दश दिशो भूरेणुमुक्तं नभः ।

---

११२ [1] Akṣaras omitted. [2] MS. ष. [3] MS. व. [4] MS. त्त्र?
११३ [1] MS. द्रि.
११४ [1] Akṣaras lost. [2] MS. सी.
११५ [1] MS. °रचेरत°. [2] Akṣaras lost. [3] MS. त्त.

किं चान्यत्कलिकोर्मिमेदुरसुखी जाता कदम्बच्छवि
श्छिद्यन्ते कियता क्षणेन शिखिनां मौनव्रतग्रन्थयः ॥

११६

केदारे नववारिपूर्णजठरे किंचित्क्वणद्दर्दुरे
शम्बूकाण्डकपिण्डपाण्डरतटमान्तस्थलीवीरणे ।
डिम्भा दण्डकपाणयः प्रतिदिशं पङ्कच्छटाचर्चिता
श्चुभ्रूश्चुभ्रूरिति भ्रमन्ति रभसादुद्यायिमत्स्योत्सुकाः ॥

११७

समन्ततोविस्फुरदिन्द्रनील
मणिप्रभाविच्छुरितान्तरालः ।
मर्त्यावतीर्णस्य विडोजसो ऽयं
नीलांशुकच्छत्त्रमिवाम्बुवाहः ॥

११८

खद्योतच्छुरितान्धकारपटलाः स्पष्टस्फुरद्विद्युतः
स्निग्धध्वानविभावितोरुजलदोन्नाहा रटत्कम्बवः ।
एता केतकभेदवासितपुरोवाताः पतद्धारयो
न प्रत्येमि जनस्य यद्विरहिणो यास्यन्ति सोढुं निशाः ॥

*Skm. II. 827 (कस्यचित्).

११९

एतस्मिन्मदजर्जरैरुपचिते कम्बूरवाडम्बरैः
स्तैमित्यं मनसो दिशत्यनिभृतं धारारवे मूर्छति ।

*Skm. II. 807 (वातोकस्य).

---

११६ [1] MS. वं. [2] MS. दि. [3] MS. श्च.
११७ [1] MS. त्र.
११८ [1] *Skm.* ध्या.
११९ [1] *Skm.* also ०करा (B.). [2] *Skm.* ०धरे.

उत्सङ्गे[1] ककुभो विधाय रसितैरम्भोमुचां घोरय
न्मन्ये मुद्रितं[2] चन्द्रसूर्यनयनं व्योमापि निद्रायते[3] ॥

१२०

गम्भीराम्भोधराणामविरणनिपतद्वारिधारानिनादा
नीषन्निद्रालसाक्षा दृढगृहपटलारूढकुष्माण्डवल्लशा:[1] ।
दोर्भ्यामालिङ्ग्यमाना जलधरसमये पल्लवषण्डे निशायां
धन्याः शृण्वन्ति सुप्ताः स्तनयुगभरितोर . . . . . . ॥

१२१

. . . . . . . .

. . . . . . . .

. . . (fol. 23*a*) वोदये ऽद्य जलदव्यालो[ल]पुच्छच्छद
च्छत्त्रं[1]च्छादितमौलयो[2] दिशि दिशि क्रीडालसाः केकिनः ॥

१२२

गायति हि नीलकण्ठो नृत्यति[1] गौरी तडित्तरलतारा ।
आस्फालयति मृदङ्गं तदनु घनो ऽयं महाकालः ॥

१२३

अलकेषु चूर्णभासः स्वेदलवाभान् कपोलफलकेषु ।
नवघनकौतुकिनीनां वारिकणान् पश्यति कृतार्थः ॥

---

११९ [1] *Skm.* also (A.). तत्संगे ; MS. °ङ्के. [2] *Skm.* नि.
[3] MS. has मुद्रियते.
१२० [1] *Sic* MS. (or ल्य: ?).
१२१ [1] MS. त्त्व ? [2] MS. न.
१२२ [1] MS. ते (*ti*).

१२४

काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले न हि न हि सखि पिच्छिलः पन्थाः ॥

*Sāhityad.* p. 288 (anon.).

१२५

असितभुजगशिशुवेष्टितमभिनवमाभाति केतकीकुसुमम् ।
आयसवलयालंकृतविषाणमिव दन्तिनः पतितम् ॥

१२६

स्तम्बेषु केतकीनां यथोत्तरं वामनैर्दलैरद्य ।
विदलन्ति मेघतर्णक[क]च्छच्छविकेशराः सूच्यः ॥

१२७

धूलीभिः केतकीनां परिमलनसमुद्धूलिताङ्गः समन्ता
दन्तोद्वेल्लद्बलाकावलिकुणपशिरोनद्धनीलाभ्रकेशः ।
प्रेङ्खद्विद्युत्पताकावलिरुचिरधनुःखण्डखट्वाङ्गधारी
संप्राप्तः प्रोषितस्त्रीप्रतिभयजननः कालकापालिको ऽयम् ॥

१२८

मेघश्यामदिशि प्रवृत्तधनुषि क्रीडत्तडित्तेजसि
च्छन्नाहर्निशि गर्जितप्रमनसि प्रस्तानलीलाकपि ।
पूर्णस्रोतसि शान्तचातकतृषि व्यामुग्धचन्द्रत्विषि
प्राणान् पान्थ कथं दधासि निवसन्नेतादृशि प्रावृषि ॥

---

१२६ [1] MS. सु. [2] MS. स. [3] MS. मे. [4] MS. न. [5] MS. भ ?

१२७ [1] MS. म. [2] This akṣara is partly effaced.

१२९

For reff. see below.

क्षपां[1] क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां[2]
प्रताप्यो[3]र्वीं सर्वां वनगहनमुच्छाद्य[4] (fol. 23b) सकलम्।
क्व संप्रत्युष्णांशुर्गत इति समन्वेषण[5]परा
स्तडिद्दीपालोकैर्दि[6]शि दिशि चरन्तीव[7] जलदाः॥

१३०

*Skm. II. 830 (कस्यापि).

विद्युद्दीधितिभेदभीषणतमःस्तोमान्तराः संतत
श्यामाम्भोधररो[1]धसंकटवियद्विप्रोषितज्योतिषः।
खद्योतानु[2]मितोपकण्ठतर[3]वः पुष्णन्ति गम्भीरता
मासारोदकमत्तकीटपटलीक्वाणोत्तरा रात्रयः॥

अभिनन्दस्य॥

१३१

हर्षोल्ला[1]सितचारुचन्द्रकबृहद्बर्है[2]र्वनानाममी
जाताः पुष्पितबालशाखिन इवाभोगा भुजङ्गाशिभिः।

---

१२९ *Skm. II. 812 (ओंकण्ठस्य). Sbhv. 1765 (पाणिनेः). Śp. 3869 (पाणिनेः). *Sml. B. 119b (पाणिनेः). *Sabhyāl. VI. 24b (पाणिनेः). Padyaracanā XI. 35 (पाणिनेः). *S.-Ratnak. III. 55 (anon.). [1] Sbhv., Śp. °पाः. [2] MS. रे (ri). [3] MS. थ्यो. [4] Sbhv., Śp., Sabhyāl., Padyarac. छात्त्वा तरु-गहनमुच्छोष्य; S.-Ratnak. °मुच्छुष्य (!); Skm. सर्वां . . . मुत्साद्य. [5] Sbhv. समालोकन; Śp., Sabhyāl., S.-Ratnak., Padyarac. तदन्वेषण. [6] Sbhv., Śp. °का दि. [7] MS. न्ती; Sbhv., Śp. चरन्तीह; Skm. तरन्तीव and चरन्तीव; Sabhyāl. चलन्तीव.

१३० [1] MS. वोधय; Skm. °वाधस. [2] Skm. °तोन्न. [3] Skm. also न (B.).

१३१ [1] MS. ल्लां. [2] MS. है.

स्पृष्टाः कोटरनिर्गतार्धतनुभिः पातुं पयोदानिलं
निर्यद्वंशकरीरकोटय इव क्षोणीभृतो भोगिभिः ॥

शतानन्दस्य ॥

१३२

एताः पङ्किलकूलरूढनलदस्तम्बप्रवणात्कम्बवः
क्रीडत्कर्कटचक्रवालविचलज्जम्बालतोयाविलाः ।
हृल्लेखं जनयन्त्यनूपसरितामुत्तुण्डगण्डूपदो
त्कीर्णक्लिन्नमृदो नदस्यपुटितप्रान्तास्तटीभूमयः ॥

योगेश्वरस्य ॥

*Skm. II. 817 (परमेश्वरस्य).

१३३

नवे धारासारे प्रमदचटुलायाः स्खलजुषो
वराटीशुभ्रायाः शफरसरणेरेभिरुपरि ।
कुलीरैर्भ्राम्यद्भिर्गणयितुमिव व्यापृतकरा
मनः क्रीणन्तीव प्रकटविभवाः पल्वलभुवः ॥

अभिषेकस्य ॥

१३४

विन्ध्याद्रिमहालिङ्गं स्नपयति पर्जन्यधार्मिकः शुचिभिः ।
जलदेन्द्रनीलगण्डूषतोर्जितैः संप्रति पयोभिः ॥

---

१३२ [1] *Skm.* म्बाः. [2] MS. क्क or च. [3] *Skm.* °विलस. [4] MS. रै. [5] *Skm.* त्कीर्णाज्झीर्ण. [6] *Skm.* °दर्दुरस्य. [7] MS. टा.
१३३ [1] MS. चा. [2] MS. र्भ. [3] MS. च.
१३४ [1] MS. °म्याचि. [2] MS. स्व. [3] MS. श्र. [4] MS. विद्म.

## [॥ मदनव्रज्या ॥]

१३५

. . . . . . . .

. . . . . . . .

(fol. 31*a*) . . . . . .

. राः प्रीतिरती इति क्व महिमा कामस्य नालौकिकः ॥

मनोविद्यायाः ॥

१३६

*Viddhaś.* I. 1.
**Skm.* I. 469.
*Śp.* 3077 (anon.).
**Sml. B.* 7b.
**Sabhyāl.* I. 12 (anon.).

कुलगुरुरमराणां[1] केलिदीक्षाप्रदाने[2]
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृ[3]षत्कै[4]र्दे[5][वदेवस्य] जेता
जयति सुरत[6]लीलानाटिकासूत्रधारः ॥

राजशेखरस्य ॥

१३७

**Skm.* I. 466.

वन्दे देवमनङ्गमेव रमणीनेत्रोत्पलच्छद्मना[1]
पाशेनायति[2]शालिना सुनिविडं संय[म्य लोकत्र]यम् ।
येनासावपि भस्मलाँ[3]ञ्छिततनुर्देवः कपाली बलात्
प्रेमक्रुद्धनगात्मजाङ्घ्रि[4]विनतिक्रीडाव्रते दीक्षितः ॥

ललितोकस्य ॥

---

१३६ [1] *Skm., Śp., Sml. B., Sabhyāl., Viddhaś.* °रवलानां. [2] *Śp.* °प्रबन्धे. [3] MS. पू. [4] MS. त्कै. [5] *Sabhyāl.* मदन. [6] MS. से.
१३७ [1] MS. द्मा corrected to द्म. [2] MS. त. [3] *Skm.* ना. [4] MS. °जांह्रि.

१३८

स जयति सं[1][कल्पभवो रति]मुखशतपत्त्रचुम्बनभ्रमरः[2] ।
यस्यानुरक्तललनानयनान्तविलोकितं[3] वसतिः[4] ॥
दामोदरगुप्तस्य[5] ॥

*Kuṭṭanīmata* v. 1.
Cf. *Vetālap.* xxiv (p. 202 of Uhle's ed.).

१३९

अहो धनुषि नैपुण्यं मन्मथस्य . . . .[1] ।
[शरी]रमक्षतं कृत्वा भिनत्त्यन्तर्गतं मनः[2] ॥

१४०

धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला
मनो भेद्यं शब्दप्रभृतय इमे पञ्च विशिखाः[1] ।
[2]इया[ज्जेतुं य]स्य त्रिभुवन[मदेहस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥]

*Skm. I. 470 (कस्यचित्).
Sbhv. 82 (घण्टकस्य).
*Subhāṣ. II (10*a*) (anon.).
Hemac. p. 16 (anon.).

---

१३८ [1] MS. स. [2] MS. सु. [3] *Kuṭṭ.* °न्तविलोकनं; MS. विलोकिलोकितं. [4] MS. ति (*ti*). [5] स्य is here erased in the MS.

१३९ [1] Read जयिपिणः or सुधन्विनः? [2] MS. क्ष.

१४० [1] *Skm.* च. [2] Reading of *c-d*, as in *Skm.* So also *Sbhv.* and *Subhāṣ.* (with, however, स कामः कामान्वो) and Hemac. (इयज्जे°). The MS. passes, *viâ* reminiscence or homoeoteleuton, from इया . . . . स्य to ll. *c-d* of the verse

[जयति स मदलेखोच्छृङ्खलप्रेमवामा
ललितसुरतलीलादैवतं पुष्पचापः ।]
त्रिभुवनजयसिद्धौ यस्य शृङ्गारमूर्तेर्
उपकरणमपूर्वं माल्यमिन्दुर्मधूनि ॥
उत्पलराजस्य ॥

*Skm. I. 463.

१४१

*Skm. I. 465 (वल्लनस्य).

याच्यो न कश्चन गुरुः प्रतिमा च कान्ता
पूजा विलोकनवि[1]गूहं[2]नचुम्बनानि ।
ञात्मा (fol. 31*b*) निवेद्यमितरव्रतसारजें[3]वी
वन्दामहे मकरकेतनदेवदीक्षाम् ॥

वल्लणस्य ॥

---

१४१ [1] *Skm.* नि. [2] MS. गु. [3] *Sic* (for जै ?).

## ॥ वयःसंधिव्रज्या ॥

### १४२

भ्रुवोः काचिल्लीला परिणतिरपूर्वा नयनयोः
स्तनाभोगो[1] ऽव्यक्तस्तरुणिमसमारम्भसमये ।
इदानीं बालायाः किं[2]ममृतमयः किं मधुमयः
किमानन्दः साक्षाद्ध्वनति मधुरः पञ्चमकलः[3] ॥

वीर्यमित्रस्य ॥

*Skm. II. 7 (राजोकस्य). Śp. 3274 (कस्यापि).

### १४३

उन्मीला[1][लकभ[2]]ञ्जनानि कवरीपाशेषु शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनचेष्टि[3]तानि वचसि[4] छेकोक्तिसंक्रान्तयः
स्त्री[णां स्नायति शै[5]]शवे प्रति[6]कलं कोऽप्येष कोलि[7]क्रमः ॥

Viddhaś. II. 5. Bālar. III. 23.

### १४४

विधत्ते[1] सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।
यदाद[त्ते दृश्यादखि[2]]लमपि भावव्यतिकरं
मनोवृत्तिं द्रष्टुः[3] प्रथयति च दृश्यं प्रति जनम् ॥

एतौ राजशेखरस्य ॥

Viddhaś. II. (after) 13; III. (after) 21; IV. 8.

---

१४२ [1] *Skm.*, *Śp.* ०गो व्य. [2] MS. किं. [3] *Skm.* इदानीमेतस्याः कुवलयदृशः प्रत्यहमयं नितम्बस्याभोगो नयति मणिकाञ्चीमधिकतां ॥ *Śp.* as our MS., with किं विषमयः (*c*) and पञ्चमरवः (*d*).

१४३ [1] MS. म्ना. [2] Akṣaras lost. [3] *Bālar.* ०वर्ति. [4] *Bālar.* सां. [5] Akṣaras lost. [6] MS. ते (*ti*). [7] *Bālar.* प.

१४४ [1] MS. धं (?). [2] Akṣaras lost. [3] MS. ष्टः ; *Viddhaś.* मनोवृत्तिर्द्रष्टुं मुखरयति.

१४५

एतद्दधाति[1] नवयौवननर्तकस्य
कश्मीरजच्छुरित[2]तालकयुग्म . . ।
. .[3] समुच्छ्वसितवृत्ति मनागुपान्ते
लब्धात्मसीम कुचकुड्म[4]लयुग्ममस्याः ॥

१४६

यौवननगरारम्भे रामाहृदयस्थलीषु कुसुमेषोः ।
म[1]करपताकेवेयं राजति रोमावली रम्या ॥

[॥ तरुणीव्रज्य ॥]

१४७

*Viddhaś.* III. 16.
**Skm.* II. 544 (राजशेखरस्य)
**Sabhyāl.* III. 77 (ditto).
*Pracaṇḍap.* 27.

[कण्ठे मौक्तिकमालिकाः स्तनतटे[1] कार्पूरमच्छं[2] रजः
सान्द्रं चन्दनमङ्गके वलयिताः[3] पाणौ मृणालीलताः ।
तन्वी नक्त[4]मियं चकास्ति तनु[5]नी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव ग](f. 36a) लिता व्योमाग्रमारोहतः[6] ॥

१४८

लीलास्खलच्चरणचारुगता[गता[1]]नि
तिर्यग्विवर्तितविलोचनवीक्षितानि ।
वामभ्रुवां मृदु च मञ्जु च भाषितानि
निर्मायमायुधमि[दं[2]] मकरध्वजस्य ॥

---

१४५ [1] MS. ते (*ti*). [2] MS. ता. [3] Four akṣaras lost; read युग्मशोभां । किंचित्? [4] MS. ग्म. १४६ [1] MS. म्र.

१४७ [1] *Pracaṇḍap.* मौक्तिकदाम गण्डतलयोः. [2] *Skm.* च्छं. [3] *Skm.* ताः; *Pracaṇḍap.* विचकिलस्रक्शेखरो मूर्धनि. [4] *Pracaṇḍap.* बाढमि. [5] *Skm.*, *Sabhyāl.* शुचि; *Pracaṇḍap.* तनु. [6] *Pracaṇḍap.* व्योम्नि द्रुतं गच्छतः.

१४८ [1] Two akṣaras omitted. [2] Akṣara omitted.

१४९

दृष्टा काञ्चनयष्टिरद्य[1] नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतपद्ममेकम[2]निशं प्रोत्फुल्लमालोकितम् ।
तत्रोभौ मधुपौ तथोपरि तयोरेको ऽष्टमीचन्द्रमा
स्त[3]स्याग्रे परिपुञ्जितेन तमसा नक्तंदिवं स्थीयते ॥

*Skm. ii. 17 (रे [वे?] तोकस्य).

१५०

मध्येहेमलतं कपित्थयुगलं प्रादुर्बभूव क्रम
प्राप्तौ तालफलद्वयं[1] तदनु तौ[2] निःसंधिभावस्थितम् ।
पश्चात्तु[3]ल्यसमुन्नतिव्यतिकरं सौ[4]वर्णकुम्भद्वया
कारेण स्फुटमेव यत्परिणतं क्वेदं[5] वदामो ऽद्भुतम् ॥

*Skm. ii. 16 (रेतोकस्य).

श्रीवित्तोकस्ये[6]ती ॥

१५१

स्मितज्योत्स्नालिप्तं मृगमदमसीप[1]त्त्रहरिणं
मुखं तन्मुग्धाया हरति हरिणाङ्कस्य ललितम् ।
क्व चन्द्रे सौन्दर्यं तदधररुचिः[2] सातिशयिनी
क्व बालायास्ते ते क्व चटुलकटाक्षा नयमुषः ॥

यागोकस्य ॥

१५२

आश्चर्यमूर्जितमिदं किमु किं मदीय
श्चित्तभ्रमो यदयमिन्दुरनभ्रे ऽपि ।

---

१४९ [1] MS. प. [2] *Skm.* ०द्भुतमेकपद्मम. [3] MS. ष्ट or ष्ट (*sṭa*). [4] MS. त.

१५० [1] MS. य. [2] *Skm.* ०द्वयं तदभव. [3] MS. तु. [4] MS. सौ. [5] MS. मं. [6] MS. स्ये.

१५१ [1] MS. य. [2] MS. ०रुचिरः.

तत्रापि कापि ननु चित्रपरंपरेय
मुज्जृम्भितं कुवलयद्वितयं यदत्र ॥
श्रीहर्षपालदेवस्य ॥

१५३

*Skm. II. 347. *Sml. P. 106b (गोइधोइक-विराजयोः). *Sml. B. 132b (गो ... जस्य). Sāhityad. p. 253 (anon.).

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पले ऽपि विमृशति करमर्पयितुं कुसुमलावी ॥
धरणीधरस्य ॥

१५४

यौवनशिल्पिसुकल्पितनूतनतनुवेश्म विशति (fol. 36b) रतिनाथे ।
लावण्यपल्लवाङ्कौ मङ्गलकलशौ स्तनावस्याः ॥

१५५

Śp. 3347 (कस्यापि). *Sabhyāl. I. 114 (anon.). *S.-Hārāv. C. 148 (anon.).

एकमेव बलिं बद्ध्वा जगाम हरिरुन्नतिम् ।
अस्यास्त्रिबलिबन्धेन सैव मध्यस्य नम्रता ॥

१५६

*Skm. II. 381 (कस्यचित्).

रोमावली कनकचम्पकदामगौर्या
लक्ष्मीं तनोति नवयौवनसंभृतश्रीः ।
त्रैलोक्यलब्धविजयस्य मनोभवस्य
सौवर्णपट्टलिखितेव जयप्रशस्तिः ॥

---

१५३ [1] Sml. P. सत्सु. [2] MS. ष. [3] Sml. P. र्यं. [4] Sml. P. पुरः पत्युः.

१५४ [1] MS. ते (ti).

१५५ [1] MS. द्वा. [2] Sabhyāl. त; Śp. and S.-Hārāv. have तन्व्यास्त्रि°. [3] MS. स्ति.

१५६ [1] Skm. also (B.) °बद्ध. [2] MS. ट्ट (ṭta).

१५७

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः[1] ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे[2] वाम[3]लोचनाः ॥

*For reff. see below.*

१५८

सोऽयमभ्युदितः पश्य प्रियाया मुखचन्द्रमाः ।
यस्य पार्वणचन्द्रेण तुल्यतैव हि लाञ्छनम् ॥

१५९

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥

श्रीहर्षदेवस्य ॥

*Ratnāv.* II. 35. *Sbhv.* 1513. **Sml. B.* 93*b*.

१६०

मैकं तम[1]ःस्तवकमूर्ध्व[2]मपा[3]कृथास्त्व
मे[णं] त्यजास्य विमले नयने[4] गृ[5]हाण ।
लोलालकं तरलवीक्षितमायताक्ष्याः
साक्षान्मुखं यदि भवाननुक[6]र्तुकामः ॥

**S.-Hārāv.* C. 85 *bis* (anon.).

---

१५७ *Viddhaś.* I. 2. **Skm.* II. 107 (राजशेखरस्य). **Sml. B.* 61*a* (राजशेखरस्य). **Saml.* 1 (anon.). *Sbhv.* 1309 (कस्यापि). *Śp.* 3078 (क्षेमेन्द्रस्य). **Sabhyāl.* I. 17 (राजशेखरस्य). **S.-Ratnak.* v. 40 (anon.). Hemac. pp. 139, 172 (anon.). *Kuvalay. ad.* v. 101 (anon.). *Sāhityad.* p. 259 (anon.). *Kāvyapr. ad.* x. 53 (anon.). *At.* p. 44 (anon.). *As.* p. 138 (anon.). *Ak.* p. 408 (anon.). *Rasagaṅg.* p. 729 (anon.). [1] MS. या. [2] *Kāvyapr.*, *Sāhityad.* स्तुमो. [3] *As.* चारु.

१६० [1] MS. म. [2] MS. र्द्धे. [3] MS. या. [4] *S.-Hārāv.* नयने विपुले. [5] *S.-Hārāv.* ह. [6] MS. र्त्तुं.

१६१

एतस्मिन्नवदातकान्तिनि कुचद्वन्द्वे कुरङ्गीदृशः
संक्रान्तप्रतिबिम्बमैन्दव[1]मिदं द्वेधा विभक्तं वपुः ।
आनन्दात्तरलस्य पुंष्पधनुषस्तत्कालनृत्योत्सव
प्राप्तिप्रोद्यतकांस्यतालयुगलप्रायं[2] समालोक्यते ॥

वसुकल्पस्य ॥

१६२

घनावूरू[1] तस्या यदि यदि विदग्धो ऽयमधरः
स्तनद्वन्द्वं[2] सान्द्रं यदि यदि[3] मुखाब्जं विजयते ।
हतौ रम्भास्तम्भौ हतमहह बन्धूककुसुमं
हतौ हेम्नः कुम्भावहह विहतः पार्वणशशी ॥

१६३

*Skm. II. 361. *Sml. P. 77b (भासस्य). *Sml. B. 94a (भोजदेवस्य).

यदपि (fol. 37a) विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारु स्त्रीणां मुखेषु विभाव्यते[1] ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो
रमृतमधरे तिर्यग्भूते विषं[च विलोच]ने ॥

लक्ष्मीधरस्य ॥

१६४

तरलनयना तन्वङ्गीयं पयोधरहारिणी
रचनपटुना मन्ये धात्रा शशिद्रवनिर्मिता ।

---

१६१ [1] MS. न. [2] MS. यु.
१६२ [1] MS. वू. [2] MS. न्द्व. [3] MS. द्दे (di).
१६३ [1] Sml. P. °लोक्य.

भवतु महिमा लावण्यानामयं कथमन्यथा
विगलित[तनु]र्लेखाशेषः कथं च निशाकरः ॥
सुवर्णरेखस्य ॥

१६५

सोऽनङ्गः कुसुमानि पञ्च विशिखाः पुष्पाणि बाणासनं *Skm. II. 108.
स्वच्छन्दच्छिदुरा मधुव्रतमयी पङ्क्तिर्गुणः का[मुके] ।
एवंसाधन उत्महेत स जगज्जेतुं कथं मन्मथ
स्तस्यामोघममूर्भवन्ति न हि चेदस्त्रं कुरङ्गीदृशः ॥
अमरसिंहस्य ॥

१६६

गुरुतां जघनस्तनयोः स्रष्टुमु . . . . . . . लितवतः ।
मुग्धाङ्गुलिसंधिच[य]निर्गतलावण्यपङ्किला त्रिवली॥

१६७

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं [कन्दर्पं जननयन]निर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥
भवभूतेः ॥

Mālatīm. v. 29. Sarasvatīk. ad. I. 138 (anon.). Padyarac. XIII. 9.

१६८

त्वद्गण्डस्थलपाण्डु देहि लवलं देहि त्वदोष्ठारुणं
बिम्बं देहि नितां[स्तनि त्वदलकश्या]मं च मे जाम्बवम् ।

*Skm. II. 703 (वाक्कूटस्य).

१६४ [1] Or °रुचि ? [2] MS. का.
१६५ [1] *Skm.* also बाणीसमं. [2] *Skm.* एतस्ता. [3] MS. सं.
१६६ [1] *Sic* MS. (for मया ?). [2] MS. ति.

इत्यक्षुण्णमनोज्ञचाटुजनितव्रीडः पुरन्ध्रीजनो
धन्यानां भवनेषु पञ्जरशुकैराहारमभ्यर्थ्यते ॥

वाक्कूटस्य ॥

१६९

दूर्वाश्यामो जयति . . . . . . . . . . . . . (fol. 37b) कपोलः
कस्तूरीभिः किमिह लिखितो द्राविडः पत्त्र[1]भङ्गः ।
प्रत्ययाणि प्रियकररुहक्रीडितान्येव मुग्धे
शोभाभाञ्जि स्तनकल[श]योस्तन्वि हारो ऽपि भारः ॥

वीर्यमित्रस्य ॥

१७०

*Sarasvatīk. ad. I. 73, v. 170 (anon.).*

[जनः पुण्यैर्याया]ज्जलधिजलभावं जलमुच
स्तथावस्थं चैनं विदधति[2] शुभैः शुक्ति[3]वदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दति[5] यया
रुचिं तन्वन् पीनस्तनि हृ[दि तवायं विलुठति ॥][6]

अचलसिंहस्य ॥

१७१

*Skm. II. 480 (राजशेखरस्य)

न नीलाब्जं चक्षुः सरसिरुहमेतन्न वदनं
न बन्धूकस्येदं कुसुम[1]मधरस्तद्द्युतिधरः ।
ममाप्यत्र भ्रान्तिः प्रथममभवद्भृ[ङ्ग] किमु ते
कृतं यत्नैरेभ्यो विरम विरम श्राम्यसि मुधा[2] ॥

---

१६८ [1] MS. सु.
१६९ [1] MS. त्त्न. [2] MS. न्द्र.
१७० [1] Six akṣaras lost in MS. [2] *Sarasvatīk.* तु.
[3] MS. क्ति (*kti*). [4] *Sarasvatīk.* तु. [5] MS. न.
[6] Akṣaras lost in MS.
१७१ [1] *Skm.* मुकुल. [2] *Skm.* विरमेत्यञ्जलिरियं ॥

१७२

मनसिजविजयास्त्रं नेत्रविश्रामपात्रं
तव मुखमनुकर्तुं तन्वि वाञ्छा द्वयोश्च ।
इति जनितविरोधे . . . .[2] द्विवार्यं
हरति तुहिनरश्मिः पङ्कजानां विकाशम् ॥

धर्मकरस्य ॥

१७३

चेतोभुवो रचितविभ्रमसंविधानं
नूनं न गोचरमभूद्दयितानने वः ।
तत्कान्तिसंपद[म]वाप्स्यत चेच्चकोराः
पानोत्सवं किमकरिष्यत चन्द्रिकासु ॥

१७४

यन्नीयते जगति शस्त्रहता व्रजन्ति
नूनं सुरालयमिति स्फुटमेतदद्य ।
सूच्यग्रमात्रपरिखण्डितवि[ग्रहे]ण
प्राप्तं[1] यतः[2] स्तनतटं तव[3] कञ्चुकेन ॥

*Sbhv.* 1544 (कस्यापि).

१७५

अनेन कुम्भद्वयसंनिवेश
संलक्ष्यमाणेन कुचद्वयेन ।
उन्मज्जता यौवनवारणेन
वापीव तन्वङ्गि तरङ्गितासि ॥

भागुरस्य ॥

१७२ [1] MS. स्त्रं. [2] Read वैरिभावा° ?
१७४ [1] MS. प्ती. [2] MS. त. [3] *Sbhv.* खलु.

१७६

(fol. 39a) नित[म्ब]श्रीः कं न स्वगतमितयानं जनयति
स्तनाभोगो मुग्धे हृदयमपरस्यापि हरति ।
तवाक्ष्णो ऽपभ्रष्टं[1] स्मरकरशरेन्दीवरदलं
मुखं तद्यस्येन्दुः प्रथमलिखनप्रोञ्छनपदम् ॥

वल्लणस्य ॥

१७७

*Skm. II. 379 (राजशेखरस्य)

सजन्मानौ तुल्यावभिजनभुवाजन्म[1] च सह
प्रवृद्धौ नाम्ना च स्तन इति समानौ[2]वुद[3]यिनौ ।
मिथः सीमामात्रे यदिदमनयोर्मण्डल[4]वतो[5]
रपि स्पर्धायुद्धं[7] तदिह हि नमस्यः कठिनिमा[8] ॥

भावाकदेव्याः ॥

१७८

शृङ्गारद्रुममञ्जरी सुखसुधासर्वस्वनिक्षेपभूः
सर्गाभ्यासफलं विधेर्मधुमयी वर्तिर्जगच्चक्षुषाम् ।
लीलानिर्झरिणी[1] मनोजनृपतेर्लावण्यसिन्धो[2]रियं
वेला कस्य मृगेक्षणा सुकृतिनः सौन्दर्यसीमास्थली ॥

हिमाङ्गस्य ॥

---

१७६ [1] MS. ०भष्ट (sic).

१७७ [1] Skm. ०वपि जनितुराजन्म (A.) and ०जनिभृता जन्म (B. sic). [2] MS. सं (?) सानानि with नि deleted. [3] MS. ०द्दुपि. [4] MS. here inserts ꣸ five times. [5] Skm. भू. [6] MS. here inserts ꣸ four times. [7] Skm. सञ्जालुलं. [8] Skm. नमस्या कठिनता.

१७८ [1] MS. ०निञ्झरे (ri) ण्य. [2] MS. न्धो.

१७९

किमियममृतवृत्तिः किं नु लावण्यसिन्धुः
किमथ नलिनलक्ष्मीः किं नु शृङ्गारवल्ली ।
इति[1] नवहरिणाक्ष्याः कान्तिमालोचयन्तो
जगदखिलमसारं भा . .[2] लोचयामः ॥

१८०

सितज्योत्स्नाधौतस्फुरदधरपत्त्रं[1] मृगदृशां[1]
मुखाब्जं चेत्पीतं तदलमिह पीयूषकथया ।
अहो मोहः को ऽयं शतमखमुखानां सुमनसां
यदस्यार्थे ऽत्यर्थं जलधिमथनायासमविशन् ॥

१८१

एतल्लोचनमुत्पलभ्रमवशात्पद्मभ्रमादाननं
भ्रान्त्या[1] बिम्बफलस्य चाजनि दधद्वामाधरो [वे]धसा ।
तस्याः सत्यमनङ्गविभ्रमभुवः प्रत्यङ्गमासङ्गि(f. 39b)नी[2]
भ्रान्तिर्विश्वसृजो ऽपि यत्र कियती तत्रास्मदादेर्मतिः ॥

वीर्यमित्रस्य ॥

१८२

आनीलचू[चु]कशिलीमुखमुन्नतैक　　*Sbhv.* 1545 (कस्यापि).
रोमावलीविपुलनालमिदं प्रियायाः ।

---

१७९ [1] MS. म.　[2] MS. त्रै (?).　[3] Read भारमालोचयामः?
But the repetition of the verb आलोच् is suspicious.

१८० [1] MS. °पत्त्रं and °दृशा (read °दृशो ?).

१८१ [1] *Sic* MS. (for °न्तिं ?).　[2] MS. ना.　[3] MS. द्र.

१८२ [1] *Sbhv.* न्न.

उत्तु[1]ङ्गसंगत[2]पयोधरपद्मयुग्मं
नाभे[3]रधः कथयतीव महानिधानम् ॥

१८३

*Skm. II. 109 (कस्यचित्).

यन्नामापि सुखाकरोति[1] कलयत्युर्वीमपि द्यामिव
प्राप्तिर्यस्य यदङ्गसङ्गविधिना किं यन्न निहूयते ।
अन्तः किं च सुधासपत्न[2]मनिशं जागर्ति यद्रागिणां
विश्रम्भा[3]स्पदमद्भुतं[4] किमपि तत्कान्तेति तत्त्वान्तरम् ॥

१८४

Śp. 3340 (कस्यापि). Sāhityad. p. 290 (anon.). Sāhityak. ad. x. 6 (anon.). *Sml. P. 79b (कस्यापि).

तन्वङ्ग्याः[1] स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥

भोजदेवस्य ॥

१८५

हन्तु नाम जगत्सर्वमविवेकि कुचद्वयम् ।
प्राप्तश्रवणयोरक्ष्णोर्न मुक्तं जनमारणम् ॥

धर्मकीर्त्तेः ॥

१८६

Daśar. ad. IV. 50 (anon.). At. p. 14 (anon.).

तन्वङ्गीनां[1] स्तनौ दृष्ट्वा शिरः कम्प[य]ते युवा ।
तयोरन्तरसंलग्नां[2] दृष्टिमुत्पाटयन्निव ॥

पाणिनेः ॥

---

१८२ [1] MS. तु. [2] *Sbhv.* प्रोत्तुङ्गपीवर. [3] MS. भो with the *ā* erased.

१८३ [1] MS. ते (*ti*). [2] MS. सुधासयत्न. [3] *Skm.* °श्रान्ता. [4] *Skm.* °स्तुतं.

१८४ [1] MS. ङ्ग्या.

१८६ [1] MS. ङ्गी. *Daśar.* and *At.* read स्तनावालोक्य तन्वङ्ग्याः. [2] *Daśar.*, *At.* °निर्मग्नां. According to *At.* the verse is a समस्या, the second line being added.

१८७

शिखरिणि क्व नु नाम कियच्चिरं
किमभि[1]धानमसावकरोत्तपः ।
तरुणि[2] येन तवाधरपाटलं
दशति[3] बिम्ब[फ]लं[4] शुकशावकः ॥

*For reff. see below.*

१८८

याता लोचनगोचरं यदि[1] विधेरेणेक्षणा सुन्दरी
नेयं कुङ्कुमपङ्कपिञ्जरमुखी तेनोज्झिता स्यात्क्षणम् ।
नाप्यामीलितलोचनस्य रचनाद्रूपं भवेदीदृशं
तस्मात्सर्वमकर्तृकं जगदिदं श्रेयो मतं[3] सौगतम् ॥

धर्मकीर्त्तेः ॥

१८९

व्यर्थं (fol. 40*a*) विलोक्य कुसुमेषुमसुव्यये ऽपि
गौरीपतीक्षणशिखिज्वलितो मनोभूः ।
रोषाद्वशीकरणमस्त्रमुपाददे यत्[1]
सा सुभ्रुवां विजयते जगति प्रतिष्ठा ॥

*Skm. II. 110.

मनोविनोदकृतः ॥

१९०

आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि
व्यक्तं जन्मस[मा]नकालमिलितामंशुच्छटां वर्षति ।

*Anarghar.* VII. 80.
*Śp.* 3325.
**S.-Hārāv.* C. 84.

---

१८७ **Skm.* II. 476 (धर्मकीर्त्तेः). *Sbhv.* 2030 (कस्यापि). *Kuvalay. ad.* V. 70 (anon.). *Dhvanyāl. ad.* I. 16 (anon.). *Sāhityad.* p. 105 (anon.). Hemac. p. 46 (anon.). [1] MS. भि (*bhi*). [2] *Sāhityad.* सुमुखि. [3] MS. ति (*ti*). [4] MS. ल.

१८८ [1] MS. दि (*di*). [2] MS. णि. [3] Corrected from तः.

१८९ [1] MS. खि (*khi*). [2] MS. लि (*li*). [3] MS. स्त. [4] MS. षां.

१९० [1] MS. ति (*ti*). [2] *Śp.* समानमेव ; so *S.-Hārāv.*, which also reads व्यक्ता.

आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
संकोचादतिदुःस्थितस्य न विधेस्तच्छिल्पमुन्मीलितम् ॥

१९१

*Anarghar.* VII. 81. *Śp.* 3321 (कस्यापि). **Sml. P.* 114*b*. **Sml. B.* 143*b*.

अनेन रम्भोरु भवन्मुखेन[1]
तुषारभानो[3]स्तुलया धृतस्य ।
ऊनस्य नूनं प्रति[4]पूरणाय
तारा स्फुट[5]न्ति [प्रति]मानखण्डाः ॥

१९२

*Anarghar.* VII. 82. **Sml. B.* 143*b*. *Ak.* pp. 392–3 (anon.).

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ।
एकाग्र्यां[2] यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते[3] सुतनु वदनौपम्यमम्भोरुहाणि ॥

मुरारेरमी ॥

१९३

**Skm.* II. 365 (कस्यचित्). *Sbhv.* 1523 (विज्जाकाया:). *Śp.* 3322 ( ,, ). **S.-Hārāv.* C. 74 (विज्जायाः).

कोषः स्फीततरः स्थितानि परितः पत्त्राणि दुर्गं जलं
मैत्रं मण्डलमुज्ज्वलं चिरमधोनीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतं
यत्पद्मेन जिगीषुणापि न जितं मुग्धे[5] त्वदीयं[6] मुखम् ॥

---

१९० [1] MS. हे (*hi*). [2] *Śp.* थ ; MS. ते (*ti*). [3] MS. here inserts ल (anticipating ल्प). *S.-Hārāv.* reads °दुपरि स्थितन विधेर्य (*sic*).

१९१ [1] *Śp.*, *Anarghar.* (Calcutta) तवाननेन ; *Anarghar.* (*Kāvyamālā*) as MS. [2] *Śp.* पीयूष. [3] MS. वो. [4] *Anarghar.* (*Kāvyamālā*), *Śp.*, *Sml.* परि. [5] *Anarghar.*, *Śp.*, *Sml.* र.

१९२ [1] MS. खे (*khi*). [2] MS., *Ak.* यं. [3] MS. °युक्ते.

१९३ [1] MS. रू. [2] *Śp.* मित्रैर्मं; *S.-Hārāv.* मन्त्रैर्मं. [3] *Skm.* च. [4] *Sbhv.* प्य. [5] MS. घे. [6] *Skm.* तवेदं.

१९४

सा राम (fol. 40*b*) णीयकनिधेर्[1]धिदेवता वा
सौन्दर्यसारसमुदाय[2]निकेतनं[3] वा ।
तस्याः सखे नियतमिन्दुसुधामृणाल
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥

*Mālatīm.* I. 20. *Ak.* p. 281.

भवभूतेः ॥

१९५

उपप्राकाराग्रं प्रहिणु नयने तर्कय मना
गनाकाशे को ऽयं गलित[2]हरिणः शीतकिरणः ।
सु[3]धाबद्धग्रासै[4]रुपवनचकोरैरनुसृतां[5]
किर[6]ज्ज्योत्स्नामच्छां नवलवलपा[क]प्रणयिनी[7]म् ॥

*For reff. see below.*

राजशेखरस्य ॥

१९६

चन्द्रो जडः कद[1]लंकाण्डमकाण्डशीत
मिन्दीवराणि च विसूचितविभ्रमाणि ।

*Viddhaś.* II. 4.

---

१९४ [1] MS. here repeats निधेर्. [2] MS. प. [3] MS. here inserts and erases व.

१९५ *Viddhaś.* I. 31. *Śp.* 3516 (कस्यापि). **Sml. B.* 84*b*. **Saml.* 124 (anon.). *Sarasvatīk. ad.* IV. 49 (anon.). *Citram.* p. 45 (anon.). *Kuvalay. ad.* 35 (anon.). Hemac. p. 264 (anon.). *Daśar. ad.* IV. 50 (anon.). [1] *Sarasvatīk.*, *Citram.*, Hemac., *Daśar.*, *Kuvalay.* place pādas *c-d* before *a-b*. [2] MS. तः. [3] MS. सु. [4] *Saml.* प्रा. [5] *Viddhaś.* तः ; *Daśar.* reads °रैः कवलिता. [6] *Viddhaś.*, *Citram.*, *Śp.*, *Saml.*, *Daśar.*, *Kuvalay.* लवलिफलपाक ; Hemac. लवल° ; *Sarasvatīk.* नवलवलि ; MS. नवलवंलाप्र°. [7] *Saml.* नी.

१९६ [1] *Viddhaś.* लि.

येनाक्रियन्त सुतनोः स कथं विधाता
किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥

अयमपि तस्यैव ॥

१९७

अलीकव्यामुक्तप्रचुरकवरीबन्धनमिषा
दुदञ्चद्दोर्वल्लीद्वयधृतपरीवेशनिहितः ।
अयं जृम्भारम्भस्फटिकशुचिदन्तां[1]शुनिचयो
मुखेन्दुर्गौराङ्ग्या[2] गलितमृग[3]लक्ष्मा[4] विजयते ॥

१९८

रम्भोरु क्षिप लोचनार्धमभितो बाणान्वृथा मन्मथः
संधत्तां धनुरुज्झतु क्षणमितो[1] भ्रूवल्लिमुल्लासय[2] ।
किं चान्तर्निहितानुरागमधुरामव्यक्तवर्णक्रमां
मुग्धे वाचमुदीरयास्तु[3] जगतो वीणासु भेरीभ्रमः ॥

१९९

*Skm. II. 606 (पाणिनेः). Śp. 3803 (अचलस्य). Padyarac. IX. 32 (anon.). Aś. ad. II. 3 (anon.).

पाणौ पद्मधिया मधूकमुकुल[1]भ्रा (fol. 41a) न्त्या तथा गण्डयो
र्नीलेन्दीवरशङ्कया[2] नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कवरीषु बान्धवजन[3]व्यामोहजातस्पृहा[4]
दुर्वारा मधुपाः कियन्ति सुतनु[5] स्थानानि रक्षिष्यसि ॥

---

१९७ [1] MS. न्तां. [2] MS. ङ्ग्यां. [3] MS. here repeats लित. [4] MS. क्ष्मी.

१९८ [1] MS. तौ. [2] MS. प. [3] MS. स्त.

१९९ [1] *Skm., Śp., Aś., Padyarac.* °कुसुम. [2] MS. पा. [3] *Śp.* कवरीभरे निजकुल; *Padyarac.* °कुले. [4] *Skm.* also (B.) °मुग्धाशया. [5] *Skm., Śp., Aś., Padyarac.* तरुणि.

२००

*Skm. ii. 18 (रथाङ्गस्य).

दृष्टाः शैवलमञ्जरीपरिचिताः सिन्धोश्चिरं वीचयो
रत्नान्यप्यवलोकितानि बहुशो युक्तानि मुक्ताफलैः ।
यत्तु[1] प्रोञ्छितलाञ्छने[2] हिमरुचावुन्निद्रमिन्दीवरं
संसक्तं च मिथो रथाङ्गयुगलं[3] तत्केन[4] दृष्टं पुनः ॥

विक्रमादित्यस्य ॥

२०१

अन्योन्योपमितं युगं निरुपमं ते ऽयुग्ममङ्गेषु यत्
सो ऽयं सिक्थक[1]मास्यकान्तिमधुनस्तन्वङ्गि चन्द्रस्तव ।
त्वद्वाचां स्वरमाचिकां मदकलः पुंस्कोकिलो ऽप्येष[2] य
त्यभ्यासस्य किमस्त्यगोचरमिति प्रत्याशया मोहितः ॥

२०२

For reff. see below.

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः[1]
स्वच्छन्दं वसतो[2] जनस्य हृदये चिन्ताज्वरो निर्मितः[3] ।

---

२०० [1] MS. न्तु. [2] MS. ञ्छा. [3] *Skm.* °मिथुनं. [4] *Skm.* तत्कुत्र.

२०१ [1] MS. repeats the क. [2] Corrected (?) from प्यो.

२०२ *Skm. ii. 339. *Sbhv.* 1472. **Sml. P.* 73a. **Sml. B.* 87a. *Aucityav. ad.* v. 11. *Dhvanyāl. ad.* iii. 41. *As.* p. 67 (anon.). Hemac. p. 261 (anon.). *Kuvalay. ad.* v. 71 (anon.). **Sabhyāl.* i. 25 (anon.). **S.-Ratnak.* v. 337 (anon.). **S.-Mukt.* iii. 87 (anon.). **S.-Hārāv.* C. 88. [1] *Dhvanyāl.*, *S.-Ratnak.*, *Kuvalay.* °निर्जितः. [2] *Dhvanyāl.*, *S.-Ratnak.*, *Kuvalay.* चरतो°; *Aucityav.*, *Sbhv.*, Hemac., *As.*, *Sml. P.*, *S.-Hārāv.* °दस्य सुखं जनस्य वसतश्चि°. [3] *S.-Mukt.* शङ्काज्वरो; *As.*, Hemac. चिन्तानलो दीपितः.

एषापि स्वगु[1]णानुरूपरमणाभावाद्व[2]राकी हता
को ऽथै[3]श्चेतसि वेधसा विनिहितस्तन्व्यां[4]स्तनुं तन्वता ॥
धर्मकीर्त्तेः ॥

२०३

*Sbhv.* 1463. *Śp.* 3269 (कस्यापि). **Padyāmṛtat.* III. 10 (anon.).

किं कौमुदीः शशि[1]कलाः सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहूंकृतिदग्धमूर्तेः
संजीवनौषधिरियं वि[2]हिता वि[3]धात्रा ॥
भट्टोद्भटस्य ॥

२०४

*For reff. see below.*

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः[1] स्वयं नु मदनो मासः सं[2] पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्त[3]कौतूहलो
निर्मातुं प्र[भ] (fol. 41b) वे[4]न्मनोह[5]रमिदं रूपं पुराणो मुनि[6]ः ॥
कालिदासस्य ॥

२०२ [1] *Dhvanyāl.*, *Aucityav.*, *Sbhv.*, *As.*, Hemac., *Sml. P.*, *S.-Hārāv.* °पि स्वयमेव तुल्यरमणा°. [2] MS. न्ध; *Subhyāl.* reads this line नो जाने सखि किं कृतं नु विधिना°. [3] MS. ने (*ni*). [4] MS. न्व्यां; *S.-Ratnak.* तन्वीमिमां°.

२०३ [1] Corrected from षिं. [2] MS. हे (*hi*). [3] MS. वे (*vi*).

२०४ *Vikramorvaśī* I. 9. *Sbhv.* 1467. *Śp.* 3268. *Sāhityad.* p. 297 (anon.). *Daśar. ad.* IV. 2 (anon.). *Sarasvatīk. ad.* III. 40 (anon.). *Kāvyaprad. ad.* X. 6 (anon.). *As.* p. 68 (anon.). *Citram.* pp. 66, 102 (anon.). *Citrakh.* pp. 29-30 (anon.). *Rasagaṅg.* p. 410 (anon.). *Ak.* pp. 199, 282 (anon.). **S.-Hārāv.* C. 198. [1] *Daśar.*, *Sarasvatīk.*, and one MS. of the *Vikramorvaśī* (see Bombay Sanskrit Series edition) °निधिः. *S.-Hārāv.* ends (*a*) with कान्ताद्युतिः; *Vikram.* also कान्तप्रभः. [2] All other texts (exc. *Vikram.* MS. B. स) मासो नु. [3] MS. वै. [4] *Sbhv.* °नोतिग; *Sarasvatīk.* °नोरम. [5] *As.* also विधिः. [6] MS. ग्र.

२०५

तद्वक्त्रं यदि मुद्रिता शशिकला[1] हा हेम सा चेद्द्युति
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा[2] ।
धिक्कन्दर्पधनुर्भ्रुवौ[3] य[दि] च[4] ते किं वा बहु[5] ब्रूमहे
यत्सत्यं पुनरुक्तवस्तु[6]विमुखः सर्गक्रमो वेधसः ॥

राजशेखरस्य ॥

*For reff. see below.*

२०६

तस्या[1] मुखस्यायतलोचनायाः[2]
कर्तुं न शक्तः सदृशं प्रियायाः ।
इतीव[3] शीतद्युतिरात्मबिम्बं
निर्माय निर्माय पुनर्भिनत्ति[4] ॥

*For reff. see below.*

---

२०५ *Bālar.* II. 17. *Viddhaś.* I. 14. **Skm.* II. 491. *Śp.* 3373 (कस्यापि). **Sml. B.* 100*a*. **Sabhyāl.* I. 35. *Sarasvatīk. ad.* IV. 40 (anon.). *At.* pp. 38 and 59. *Sāhityad.* p. 336 (anon.). Hemac. p. 153. **S.-Hārāv.* C. 180. [1] *Bālar.*, *Viddhaś.*, *Skm.*, *Śp.*, *Sabhyāl.*, *Sarasvatīk.*, *Sāhityad.*, Hemac., *S.-Hārāv.* था; *At.* p. 38 ला, p. 59 था. *At.*, *S.-Hārāv.* end with तच्चेत्स्मितं . . . from (*b*). [2] MS. मु. In this line *Bālar.*, *At.*, *S.-Hārāv.* read सा दृष्टि . . . ॰स्तामेन्द्रिरो धिग्मधु; so *Śp.*, *Sarasvatīk.*, Hemac. from ॰स्तासे onwards. [3] MS. वौ. [4] *Viddhaś.*, *Skm.*, *Sabhyāl.*, *Sarasvatīk.*, च यदि; *Bālar.* and *At.* read in (*c*) सा चेत्कान्तिरतन्त्रमेवकनकं; so Hemac., but interchanging these words with the beginning of (*b*). [5] MS. ब्रू. [6] MS. स्त; *Bālar.*, *Śp.*, *Sarasvatīk.*, Hemac. read ॰विरसः; *At.* p. 38 ॰विरसः, p. 59 ॰विमुखः, and in p. 38 continues सृष्टिक्रमो.

२०६ *Sbhv.* 1517 (श्रीहर्षस्य). *Śp.* 3320 (कस्यापि). **S.-Ratnak.* v. 154 (anon.). **S.-Mukt.* II. 37 (anon.). **S.-Hārāv.* C. 88 (कस्यापि). [1] *S.-Mukt.* has (*c*)-(*d*) preceding (*a*)-(*b*). [2] *Sbhv.*, *Śp.*, *S.-Ratnak.*, *S.-Hārāv.* ॰खस्यातिमनोहरस्य. [3] *Sbhv.*, *Śp.*, *S.-Ratnak.*, *S.-Mukt.*, *S.-Hārāv.* अद्यापि. [4] *S.-Hārāv.* ॰र्भनक्ति.

२०७

तुलितस्त्वन्मुखेनायं यदुन्नमति चन्द्रमाः ।
अवनम्रमुखे व्यक्तमेतेनैवास्य लाघवम् ॥

२०८

*Skm. II. 363 (कस्यचित्).

तपस्यतीव चन्द्रो ऽयं त्वन्मुखेन्दुजयाशया[2]।
कृशः शम्भुजटाजूटतटिनीतटमाश्रितः ॥

२०९

तव तन्वि[1] स्तनावेतौ कुर्वाते विग्रहं गुरुम् ।
अन्योन्यमण्डलाक्रान्तौ नष्टसंधी नृपाविव ॥

२१०

प्रायः स्तनतटीभूमिः प्रकामफलदायिनी ।
यस्यामग्रे करं दत्त्वा योज्यते नखलाङ्गलम् ॥

२११

अमीषां मण्डलाभोगः स्तनानामेव शोभते ।
येषामुपेत्य सोत्कम्पा राजानो ऽपि करप्रदाः ॥

२१२

Bālar. x. 42.

लक्ष्मीं वक्षसि कौस्तुभस्तवकिनि प्रेम्णा करोत्यच्युतो
देहार्धे वहति त्रिपिष्टपगुरुर्गौरीं स्वयं शंकरः ।
शङ्के पङ्कजसंभवस्तु भगवानद्यापि बाल्यावधेः
सर्वाङ्गप्रणयां प्रियां कलयितुं दीर्घं तपस्तप्यते ॥

---

२०८ [1] *Skm.* शीतांशुस्त्व.  [2] *Skm.* °जिगीषया.
२०९ [1] MS. °न्वङ्गि.
२१२ [1] MS. म्ना.  [2] MS. *sic.*

## ॥ अनुरागव्रज्या ॥

२१३

दत्त्वा[1] वामकरं नितम्बफलके लीलावलम्बमध्यया
व्यावृत्तस्तनमङ्गचुम्बिचिबुकं स्थित्वा तया मां प्रति ।
अन्तर्विस्फुर[दि] (fol. 42*a*) न्द्रनीलमणिमन्मुं[2]क्तावली-
मांसलाः
सप्रेम प्रहिताः स्मरज्वरमुचो श्चिनाः कटाक्षच्छटाः[3] ॥

२१४

आकर्णा[1]न्तविसर्पिणः कुवलयच्छायामुषश्चक्षुष
क्षेपा एव तवाहरन्ति हृदयं किं संभ्रमेणा[2]मुना ।
मुग्धे केवलमेतदाहितनखोत्खाताङ्कमुत्पांशुलं[3]
बाह्वोर्मूलमलीकमुक्तकवरीबन्धच्छलाद्दर्शितम् ॥

२१५

तरत्तारं तावत्प्रथममथ चित्रार्पितमिव[1]
क्रमादेवापाङ्गे सहजमिव लीलामुकुलितम् ।
ततः किंचित्फुल्लं[2] तदनु घनबाष्पाम्बुलहरी
परिक्षामं चक्षुः पततु मयि तस्या मृगदृशः ॥

वीर्यमित्रस्य ॥

*Skm. II. 464.
*Sml. P. 65b.
*Sml. B. 72b.

---

२१३ [1] MS. त्वो. [2] MS. म्नु. [3] MS. टी.
२१४ [1] MS. र्न्ती. [2] MS. ना. [3] *Sic* MS. (for °मत्यंसलं ?).
२१५ [1] MS. च. [2] Akṣara partly lost. [3] *Skm.* °त्तुषां.
[4] *Sml. B.* तन्व्या. [5] MS. न्द्र.

२१६

*S.-Hārāv. C. 216 (वीर्यमित्रस्य).

[ली]लाताण्डवितभ्रुविभ्रमवं[1]लद्वक्त्रं कुरङ्गीदृशा
साकूतं च सकौतुकं च सुचिरं न्यस्ताः किलास्मान् प्रति।
नी[ला]ब्जव्यतिमिश्रं[2]केतकदलद्राघीयसीनां स्रजां
सोदं[3][र्यां]: सुहृदः स्मरस्य सुधया दिग्धाः कटाक्षच्छटाः॥

राजशेखरस्य ॥

२१७

For reff. see below.

दृष्टा दृष्टिमधो दधाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बं[1]लादालिङ्गिता वे[प]ते।
निर्यां[2]न्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मे ऽद्य सुतरां प्रीत्यै नवोढा प्रिया[3]॥

२१८

*Skm. II. 465.

तं[1]व्रीडाभरभुग्नमास्यकमलं विन्यस्य जानूपरि
प्रोद्यत्पक्ष्मनिरी[2] (fol. 42b) क्षितं विजयते सप्रेम वामभ्रुवः।
हास्यश्रीलवलां[3]छिता च यदसावस्याः कपोलस्थली
लोलल्लोचनगोचरं व्रजति स स्वर्गादपूर्वो विधिः॥

प्रद्युम्नस्य ॥

---

२१६ [1] *S.-Hārāv.* च. [2] MS. स्र. [3] MS. दा.

२१७ *Nāgānanda* III. 4 (35). **Skm.* II. 41 (श्रीहर्षदेवस्य). *Sbhv.* 2072 (श्रीहर्षदेवस्य). *Śp.* 3672 (श्रीहर्षस्य). *Sāhityad.* p. 40 (anon.). *Sarasvatīk. ad* v. 169 (anon.). **Sabhyāl.* IV. 127 (श्रीहर्षस्य). [1] MS. च. [2] MS. या. [3] *Śp.* has बाला वामतया प्रियस्य नितरां प्रीत्यै नवोढाभवत्; *Sarasvatīk.* °यैव संप्रति मम; *Sabhyāl.* °या प्रियस्य नितरां . . . प्रिया; the MS. याचा मारामतयैव, the मा being deleted.

२१८ [1] *Skm.* च. [2] In the MS. the vowel of री is lost. [3] *Skm.* या.

२१९

बिसकवलनलीलामग्नपूर्वार्धकायं
कमलमिति गृहीतं हंसमाशु त्यजन्त्याः ।
विरतचलिततारस्फारनेत्रं यदस्या
श्चकितमिह न दृष्टं मूढ तद्वञ्चितो ऽसि ॥

२२०

अयं लोलन्मुक्तावलिकिरणमालापरिकरः
[स्फु]टस्येन्दोर्लक्ष्मीं क्षपयितुमलं मन्मथसुहृत् ।
विशालः श्यामायाः स्खलितघननीलांशुकवृतिः
स्तनाभोगः स्निह्यन्मसृणघुसृणालेपसुभगः ॥

*Skm. II. 373.

२२१

मन्ये हीनं स्तनजघन[यो]रेकमाशङ्क्य धात्रा
प्रारब्धो ऽस्याः परिकलयितुं पाणिनादाय मध्यः ।
लावण्यार्द्रे कथमितरथा तत्र तस्याङ्गुलीना
मामग्नानां त्रिवलिवलयच्छद्मना भान्ति मुद्रा[ः ॥]

२२२

यत्रैतन्मृगनाभिपत्त्रतिलकं पुष्णाति लक्ष्मश्रियं
यस्मिन् हासमयो विलिम्पति दिशो लावण्यबालातपः।

---

२१९ [1] MS. लै (lai).
२२० [1] This akṣara is partially visible in the MS. [2] MS. यै (yi). [3] Skm. ली. [4] MS. ०लाङ्घु. [5] Skm. ति.
२२१ [1] This akṣara is partially visible. [2] MS. नाऽ.
२२२ [1] MS. ना.

तन्मित्रं[1] कुसुमायुधस्य दधती बालान्धकाराञ्चिता
तारैका[व]लिमण्डनेयमनघा श्यामा वधूर्दृश्यताम् ॥

मनोविनोदस्वामी ॥

२२३

वक्त्राम्बुजं[1] भुजमृणाललतं प्रियाया
लावण्यवारि बलिवीचि वपुस्तडागम् ।
तत्प्रेमपङ्कपतितो न समुज्जिहीते
मच्चित्तकुञ्ज(fol. 43*a*)रपतिः परिगाहमानः ॥

२२४

*For reff. see below.*

कृच्छ्रेणो[1]रुयुगं व्यतीत्य[2] सुचिरं भ्रान्त्वा[3] नितम्बस्थले
मध्येऽस्यास्त्रि[4]बलीतरङ्गविषमे नि[ष्पन्दतामागता ।
मद्दृष्टिस्तृषि]तेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललव[5]प्रस्यन्दिनी लोचने ॥

श्रीहर्षदेवस्य ॥

२२५

*Śp.* 566 (Bilhaṇa and his Guru). *Kāvyapr. ad* VII. 4 (anon.). *Śāntiśataka* II. 23 (anon.). *S.-Ratnak.* *VII. 3 (anon.).

अलम[1]तिचपलत्वात्स्वप्न[2]मायोपमत्वा
त्परिणतिविरसत्वात्संगमेन प्रिया[3]याः ।

---

२२२ [1] MS. त्त्र.

२२३ [1] MS. क्ता.

२२४ *Ratnāvalī* II. 36. **Sml. P.* 72*b* (anon.). **Sml. B.* 85*b*. *Dhvanyāl. ad* II. 4, Comm. *Sarasvatīk. ad* V. 185. *As.* (Jayaratha's Comm.), pp. 6-7. Hemac. p. 104 Comm. [1] *Ratnāv.*, *Sarasvatīk.*, *Dhvanyāl.* (some MSS.) न्कृच्छ्रादू°. [2] *Sml. P.* विलङ्घ्य. [3] *Sml. P.* न्ता ; Hemac. °रभ्रान्ता. [4] MS. त्रि. [5] *Sarasvatīk.* °भर.

२२५ [1] MS. here repeats लम. [2] MS. म. [3] *Śp.*, *Kāvyapr.*, *S.-Ratnak.*, *Śāntiś.* °नाङ्गना.

इति यदि श[तकृत्वस्त्वमालोचयाम
स्त]दपि न हरिणाक्षी[1] विस्मरत्य[2]न्तरात्मा ॥

२२६

नपुं[1]सकमिति ज्ञात्वा प्रियायां[3] प्रहितं मनः[2] ।
रमते तच्च तत्रैव[4] हताः पाणि[नि]ना वयम् ॥

For reff. see below.

२२७

हारो ऽयं हरिणा[क्षीणां लुठति स्तनमं]डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥

धर्मकीर्त्तेरमी ॥

Amaru 138. Sāhityad. p. 333 (anon.). Sāhityak. ad xi. 8 (anon.).

२२८

सा सुन्दरीति तरुणीति तनूदरीति
मुग्धेति मुग्धवदनेति मुहुर्मुहुर्मे ।
कान्तामयं[2] विरहिणी[3]मनुरन्तुकामः
कामातुरो जपति मन्त्रमिवान्तरात्मा ॥

वीर्यमित्रस्य ॥

---

२२५ [1] MS. ची. [2] S.-Ratnak. त्व.

२२६ Sbhv. 1232 (कस्यचित्). Śp. 3451. Aś. ad xx. 17 (anon.). Kuvalay. ad 89. *S.-Ratnak. vi. 462 (anon.). [1] MS. °पु(पु ?)न्स. [2] MS. here inserts ꣸. [3] Sbhv. त्वां प्रति प्रेषितं मया; Kuvalay., S.-Ratnak., Aś. प्रियायै प्रेषितं. [4] Sbhv. मनस्तत्रैव रमते; Śp., Kuvalay., S.-Ratnak. तत्तु तत्रैव रमते; Aś. तच्च तत्रैव; S.-Ratnak. also ह्रता (?) for हता.

२२७ [1] Eight akṣaras damaged or lost in MS.

२२८ [1] MS. ह्न. [2] MS. य ?; the anusvāra is lost. [3] Three akṣaras partly lost. [4] MS. य.

२२९

*For reff. see below.*

सा बाला वयमप्रगल्भमनसः[1] सा स्त्री वयं कातराः
[2]साक्रान्ता जघनस्थलेन गुरुणा[3] गन्तुं न शक्ता वयम् ।
सा पीनोन्नतिमत्पयोधरयुगं[4] धत्ते सखेदा वयं
दोषैरन्यजनां[5]श्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥

धर्मकीर्त्तेः ॥

२३०

*Mālatīm.* I. 27. *Sbhv.* 1297 (भवभूतेः). *Sarasvatīk. ad* v. 165. *At.* p. 41 (anon.). **Saml.* 131 (anon.).

अलसवलितमुग्ध[1]स्निग्ध[2]निष्पन्दमन्दै-
रधिक[3]विकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै[4]-
रपहृतमप[5]विद्धं पीतमुन्मूलि[6]तं च[7] ॥

२३१

*For reff. see below.*

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्त[1]शतपत्त्रनिभं वहन्त्या ।

---

२२९ **Skm.* II. 397 (अमरोः). *Sbhv.* 1346 (anon.). Amaru 34. Vāmana *ad* IV. 3, 12 (anon.). *Sarasvatīk. ad* III. 17 (anon.). *As.* p. 130 (anon.). *Aś. ad* XIII. 1 (anon.). Hemac. p. 271 (anon.). *Sāhityad.* p. 324 (anon.). **S.-Mukt.* I. 45 (anon.). [1] *Sbhv., Sarasvatīk., Alaṃkāraś.* ०वच. [2] All other texts transpose this and the next line. [3] MS. गुर. [4] *Sbhv.* ०भरं; Hemac. पीनं परिणाहिनं स्तनभरं. [5] *As.* ०समा.

२३० [1] *At.* ग्धु. [2] *Saml.* ग्धा. [3] *Sbhv.* ०भस. [4] MS. क्षै. [5] *Mālatīm.* also पि. [6] MS. न्मी. [7] *Sbhv.* ०तं वा; *Mālatīm.* also ०तं नु.

२३१ *Mālatīm.* I. 28. *Daśar. ad* I. 26, IV. 45 (*Mālatīm*). *Sarasvatīk. ad* v. 138. *As.* p. 27 (anon.). *Ak.* pp. 30 and 46 (anon.). *Citram.* p. 18 (anon.). **Saml.* 132 (anon.). **Sabhyāl.* VIII. (29*a*). **Rasavilāsa.* § 14 (anon.). Hemac. p. 180 Comm. (anon.). [1] *Daśar.* त्त.

दिग्धो ऽ (fol. 43b) मृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥

२३२

परिच्छेदव्यक्तिर्भवति न पुरःस्थे ऽपि विषये
भवत्यभ्यस्ते ऽपि स्मरणमतथाभावविरसम्।
न संतापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥

Mālatīm. I. 30.

२३३

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः को ऽप्यन्तर्जडयति च तापं च कुरुते[2] ॥

भवभूतेरमी ॥

Mālatīm. I. 29. Kāvyapr. ad IV. 42, X. 25 (anon.). *Sml. B. 76a. As. p. 122 (anon.). Kāvyapr. ad ad IV. 20, X. 25 (anon.).

२३४

गच्छन्त्या मुहुरर्पितं मृगदृशा तारस्फुरद्वीक्षणं
प्रान्तभ्राम्यदसंज्ञितभ्रु यदिदं किं तन्न जानीमहे।
क्वापि स्वेदसमुच्चयः स्नपयति क्वापि प्रकम्पोद्गमः[3]
क्वाप्यङ्गेषु तुषानलप्रतिसमः कन्दर्पदर्पक्रमः ॥

२३५

अमृतसिक्तमिवाङ्गमिदं यदि
भवति तन्वि तवा[ङ्ग]तवीक्षितैः।

---

२३१ [1] *Rasavilāsa* गरलेन.

२३२ [1] MS. °च्या.

२३३ [1] MS. °ध्वन्सा. [2] *Daśar. ad* IV. 24 and 63 gives this line as *d* of the verse विनिश्चेतुं शक्यो *Uttar.* I. 36.

२३४ [1] MS. द्व. [2] MS. म. [3] MS. ग:.

२३५ [1] MS. मे (*mi*). [2] Four doubtful akṣaras.

अधरमिन्दुकरादपि . . .
.[1] शुभयन्त्य रुणादपि किं दृशम् ॥

२३६

सा नेत्राञ्जनतां पुनर्व्रजति मे वाचामयं विभ्रमः
प्रत्यासन्नकरग्रहेति च करी . . . . . . . . ।
एतावद्बहु यद्बभूव कथमप्येकत्र मन्वं[1]न्तरे
निर्माणं वपुषो ममोरुतपसस्तस्याश्च वामभ्रुवः ॥
वल्लणस्य[2] ॥

२३७

For reff. see below.

[नून][1]माज्ञाकरस्तस्याः सुभ्रुवो[2] [मकरध्वजः ।
यतस्तन्नेत्रसं]चारसू[3]चिते[4]षु प्रवर्तते ॥

२३८

आदौ[1] विस्मयनिस्तरङ्गमनु च प्रेङ्खोलितं साध्वसे
व्रीडानम्रम[तः] क्षणं प्रविकसत्ता . . . . . .
. . . . दजाभिजात्यकलना . . . . . . .
. . . (fol. 44*a*)रि कथंकथंचिदगमत्प्रेयांसमेणीदृशः॥
चित्तूकस्य ॥

---

२३५ [1] Four syllables omitted.

२३६ [1] MS. त्व. [2] This name is doubtful, the akṣaras being almost entirely lost.

२३७ Bhartṛhari I. 11. *Sbhv.* 1227 (कस्यचित्). *Śp.* 3298 (कस्यापि). **Sml. B.* 92*a* (बाणस्य). **S.-Ratnak.* v. 133 (anon.). **S.-Mukt.* v. 7 (anon.). [1] Doubtful, the two akṣaras being partially lost. [2] *Sbhv.* °भगो. [3] ? मू in MS. [4] MS. तै; *S-Mukt.* reads यच्चुस°°तोऽपि प्र°.

२३८ [1] MS. दै.

२३९

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं[1] चेतः ।
चीनांशुकमिव केतोः[2] प्रतिवातं नीयमानस्य ॥

कालिदासस्य ॥

*Śakuntalā. 33 (I. fin.). *Sabhyāl. VIII. (29 a–b).*

२४०

अयं[1] ते विद्रुमच्छायो मरुमार्ग[2] इवाधरः ।
करोति कस्य नो बाले[3] पिपासाकुलितं[4] मनः ॥

दण्डिनः ॥

*For reff. see below.*

२४१

अस्यास्तुङ्गमिव[1] स्तनद्वयमिदं निम्नेव नाभी स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभा[ति] मार्दवमिदं स्निग्धः स्वभावश्चिरं[2]
प्रेम्णा मन्मुखचन्द्रमीक्षत इव स्मेरेव [व]क्तीव च[3] ॥

*Śakuntalā. (Bengal recension) 140.*

२४२

स्वच्छन्दं स्वगृहाङ्गणं भ्रमति सा मद्दर्शनाल्लीयते
धन्यान् पश्यति लोचनेन सकलेनार्धेन मां वीक्षते ।
अन्यान्मन्त्रयते पुनर्मयि गते मौनं समालम्बते
नीतो दूरमहं तया दयितया सामान्यलोकादपि[1] ॥

---

२३९ [1] *Śak.* also स्तु; so *Sabhyāl.* [2] *Sabhyāl.* °तोरभि.

२४० **Skm.* II. 358 (कस्यचित्). *Kuvalay. ad* 166 (anon.). *Sarasvatīk. ad* v. 165 (anon.). **Padyaveṇī* III. 44 (कस्यापि). [1] *Kuvalay.* एष; *Padyaveṇī* तवैष. *Sarasvatīk.* transposes the two lines. [2] *Skm.* °देश. [3] *Skm.* मुग्धे; *Sarasvatīk.* कस्य नो कुरुते तन्वि; *Kuvalay.* कस्य नो तनुते तन्वि. [4] MS. शा (perhaps corrected to सा); *Padyaveṇī* तृष्णया.

२४१ [1] MS. ष्या; *Śak.* also तस्या. [2] *Śak.* °ग्धप्रभावाच्चि. [3] *Śak.* °खमीपदी° and °रा च वक्तीव माम्.

२४२ [1] MS. रं.

२४३

स खलु सुकृतभाजामग्रणीः सो ऽतिधन्यो
विनिहितकुचकुम्भा पृष्ठतो यन्मृगाक्षी ।
बहलतरनखाग्रक्षोदविन्यस्तमार्गे
शिरसि ढमिति लिक्षां[1] हन्ति हूंकारगर्भम् ॥

२४४

*For reff. see below.*

अलसयति गात्रमधिकं[1] भ्रमयति चेतस्तनोति संतापम् ।
मोहं च मुहुः कुरुते विषविषमं वीक्षितं[2] तस्याः[3] ॥

२४५

*For reff. see below.*

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्ता[1]पयोधरयुगे रतिखेदखिन्नः ।
व[क्षो] निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपाः क्षपयति क्षणलब्धनिद्रः[2] ॥

२४६

*For reff. see below.*

धिक्तस्य मूढमनसः कुकवेः कवित्वं
यः स्त्रीमुखं च शशिनं च समीकरोति ।

---

२४३ [1] MS. च्यां.

२४४ *Sbhv.* 1262 (भट्टकर्णाटकस्य). *Śp.* 3302 (anon.). **Sabhyāl.* 29*b* (anon.). Cf. Govardhana's *Āryāsaptaśatī* 54. [1] *Śp.*, *Sabhyāl.* भ्रमयति शरीर॰. [2] *Śp.*, *Sabhyāl.* मोहं मुहुश्च कुरुते विषमिव विषमं तु वी(*Sabhyāl.* विषमे)क्षणं. [3] *Sbhv.* ःव्याः.

२४५ *Sbhv.* 1292 (कस्यापि). *Śp.* 3693 (भर्तृहरेः) 3951 (कस्यापि). *Pañcat.* (Kosegarten) I. 224. **Sabhyāl.* IV. (21*a*) (भर्तृहरेः). *Padyaracanā* VIII. 39 (भर्तृहरेः). [1] *Pañcat.* तस्याः. [2] In this line *Pañcat.* reads स्वप्स्ये कदा क्षणमवाप्य तदीयसङ्गं.

२४६ *Śp.* 3323 (श्रीधनददेवानां). **S.-Ratnak.* V. 155 (anon.). **S.-Mukt.* IV. 14 (anon.). **S.-Ślokāḥ* 3*b* (anon.). **S.-Hārāv.* C. 85 (धनदस्य). [1] *Śp.*, *S.-Ratnak.*, *S.-Mukt.*, *S.-Ślokāḥ*, *S.-Hārāv.* मन्द॰. [2] *Śp.*, *S.-Ratnak.* ॰खं तुहिनबिम्बसमं क॰.

भ्रूभङ्गविभ्रमविलासनि[रीक्षि](f. 44b)तानि
कोपप्रसादहसितानि कुतः शशाङ्के[3] ॥

२४७

तावज्जरामरणबन्धुवियोगशोक
संवेगभिन्नमनसामपवर्गवाञ्छा ।
यावन्न वक्रगतिरञ्जननीलरोचि
रेणीदृशां दशति लोचनदन्दशूकः ॥

२४८

[सा यै]र्दृष्टा न[1] वा दृष्टा मुषिताः सममेव ते ।
हृतं हृदयमेकेषामन्येषां चक्षुषः[2] फलम् ॥

For reff. see below.

२४९

सा बालेति मृगेक्षणेति विकसत्पद्माननेति क्रम
प्रोन्मीलत्कुचकुड्मलेति हृदयं[2] त्वां [धिग्] वृथा भ्राम्यसि ।
मायेयं मृ[ग]तृष्णिकास्वपि पयः पातुं समीहा तव
त्यक्तव्ये पथि मा कृथाः पुनरपि प्रेमप्रमादास्पदम् ॥
धर्मकीर्त्तेः ॥

---

२४६ [1] *Śp., S.-Ślokāḥ, S.-Hārāv.* °कटाक्ष; *S.-Mukt.* भ्रूक्षेपवि-क्षिप्तकटाक्ष. [2] *S.-Ratnak.* °क्षणा. [3] *S.-Mukt.* कुतस्तु चन्द्रे.

२४७ [1] MS. स्व.

२४८ **Skm.* II. 494 (कस्यचित्). *Sbhv.* 1254 (शक्रदेवस्य). *Śp.* 3368 (प्रभाकरदेवस्य). **Sml. P.* 65b (प्रभाकरदेवस्य). Hemac. p. 256 Comm. (anon.). [1] *Sbhv., Śp.* सा दृष्टा यैर्न; *Sml. P.* continues दृष्टा वा; Hemac. has यैर्दृष्टा सा न वा. [2] Hemac. जन्मनः

२४९ [1] MS. धा. [2] MS. य. [3] MS. °हृ.

२५०

*Skm. II. 39 (कालिदासस्य). Sbhv. 2052 (वामनस्वामिनः). Śp. 3957 ( ,, ).

अवचनं वचनं प्रिय[1]संनिधा
वनवलोक[नमवे विलोक]नम् ।
अवयवावरणं च यदुज्ज्वलं[2]
व्यतिकरेण तदङ्गसमर्पणम् ॥

२५१

रोमाञ्चैरिव कीलिता चलति नो[1] दृष्टिः कपोलस्थले
स्वान्तं प्रेमपयोधिपङ्कपतनान्निश्चेष्ट[2]मास्ते गतम् ।
उद्धाराय तयोर्गता इव पुनस्ता[3]सान्निवृत्ता इव
श्वासा दीर्घमहो गतागतममी कुर्वन्त[4] एवासते ॥

२५२

यदि सरोजमिदं क्व निशि प्रभा
यदि निशा[प]तिरह्नि कुतो नु सः ।
रचयतोभयधर्मि तवाननं
प्रकटितं[1] विधिना बहु नैपुणम् ॥

२५३

Śakuntalā. (II.) 44. *Sml. B. 72a (कालिदासस्य).

अभिमुखे मयि संहृत[1]मीक्षितं[2]
हसितं[3]मन्यनिमित्तकथो[4]दयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥

---

२५० [1] Sbhv., Śp. गुरु. [2] Sbhv., Śp. ०णं हि यदंशुक.
२५१ [1] MS. मो. [2] MS. ष्ट (ṣṭa). [3] MS. स्ता. [4] MS. न्तु or न्त्र.
२५२ [1] MS. तुं.
२५३ [1] MS. सम्वृ (cf. d). [2] MS. नी. [3] MS. ०से (si) च. [4] Śak. ०ह्नतो.

२५४

को ऽसौ कृती कथय को मदनैकबन्धु
रुन्नीवमर्चयसि कस्य मृगाक्षि मार्गम् ।
नीलाब्जकर्बुरितमध्यविनिद्रकुन्द
दामाभिरामरुचिभिस्तरलैः कटाक्षैः ॥

२५५

गुरुणा स्त[नभारेण] . . . . .
. . . . . . . .

Bhartṛhari ɪ. 16 ?
*Sbhv.* 1233 ? 1234 ?
**Sml. P.* 82*b*.
**S.-Hārāv.* C. 207 (anon.) ?

२५६

[प्रणालीदीर्घस्य प्रतिपदमपाङ्ग](fol. 46*a*)स्य सुहृदः
कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः ।
स्तुवानाः सर्वस्वं कुसुमधनुषो ऽस्मान् प्रति सखे
नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥

*Viddhaś.* ɪv. 14.
**Skm.* ɪɪ. 601 (राजशेखरस्य).

२५७

भवनभुवि सृजन्तस्तारहारावतारा
न्दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् ।
वियति विरचयन्तश्चन्द्रिकां दुग्धमुग्धां
प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥

*Viddhaś.* ɪv. 13.
**Skm.* ɪɪ. 463 (राजशेखरस्य).

---

२५६ [1] MS. स्तु; *Viddhaś.* सु; *Skm.* सुधायाः.
२५७ [1] *Skm.* °दिश. [2] *Skm.* मु.

२५८

यत्पश्यन्ति झगित्यपाङ्गसरणिद्रोणीजुषा चक्षुषा
रिङ्खन्ति क्रमदोलितोभयभुजं यन्नाम वामभ्रुवः।
भाषन्ते च यदुक्तिभिः[2]स्तवकितं वैदग्ध्यमुद्रात्मभि
स्तद्देवस्य रसायनं रसनिधेर्मन्ये मनोजन्मनः ॥

२५९

*Viddhaś.* III. 3. **Skm.* II. 461 (कालिदासस्य).

क्रमस[1]रलितक[2]ण्ठप्रक्रमोल्लासितोर
स्त[3]रलितबलिले[4]खासूत्रसर्वस्वमस्याः।
स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः
करकलितसखीकं मां दिदृक्षोः स्मरामि ॥

२६०

*Viddhaś.* II. 10. **Skm.* II. 354 (कस्यचित्).

स्मरशरधिस[1]ंकाशं कर्[2]णपाशं कृशाङ्गी
रयविगलितताडीपत्त्र[3]ता[4]टङ्कमेकम्।
वहति हृदयचोरं कुङ्कुमन्यासगौ[5]रं
वलयितमिव नालं लोचनेन्दीवरस्य ॥

२६१

*For reff. see below.*

चो[1]लाञ्चले[2]न चलहारलताप्रकाण्डे
वेणी[3]गुणेन च बला[4]द्वलयीकृतेन।

---

२५८ [1] MS. वि ?  [2] MS. भि.

२५९ [1] MS. श्र. [2] *Skm.* ण्ठं. [3] *Skm.* °तार त. [4] *Skm.* रे.

२६० [1] *Skm., Viddhaś.* नि. [2] MS. या. [3] MS. °यन्त्र. [4] MS. ढ ?. [5] *Skm.* घो.

२६१ *Viddhaś.* II. 9. **Skm.* II. 393. **Sml. P.* 105*b*. **Sml. B.* 131*b*. **Saml.* 273 (anon.). *Śp.* 3912 (कस्यापि). **Sūktiratn.* 421 (anon). *Padyarac.* IX. 36 (anon.). [1] *Viddhaś., Skm., Sml. B., Saml., Śp., Padyarac.* चे; *Sūktiratn.* चै. [2] MS. ल. [3] MS. ण. [4] *Padyarac.* चलद्.

हेलाहितभ्रमरकभ्रमं[1]मण्डलीभि[2]

श्छन्द[3]श्चयं रचयतीव चिरं नतभ्रुः ॥

२६२

अमन्दमणिनूपुरक्वणन[1]चारुचारी[2]क्रमं

झणज्झ[3]णितमेखलास्खलितता[4]रहारच्छटम् ।

इदं तरलकङ्कणावलिविशेषवाचालितं[5]

मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडितम् ॥

For reff. see below.

२६३

Viddhaś. I. 38.

सा दुग्धमुग्धमधुरच्छविरङ्गयष्टि

स्ते लोचने तरुणकेतक(fol. 46b)पत्र[1]दीर्घे ।

कम्बोर्विडम्बनकरश्च[2] स एव कण्ठः

सैवेयमिन्दुवदना मदनायुधाय[3] ॥

२६४

Viddhaś. I. 20. *Skm. II. 474. Sarasvatīk. ad II. 52 (anon.).

क्व[1] पातव्या ज्योत्स्नामृतभवनगर्भापि तृषिते[2]

मृणालीतन्तुभ्यः सिचय[3]रचना कुत्र घटते[4] ।

२६१ [1] *Skm.* स्वेच्छा. [2] *Skm.* also मि. [3] MS. न्त्र; *Sūktiratn.* °श्चक्र (?).

२६२ *Viddhaś.* II. 6. **Skm.* II. 391. *Śp.* 3929 (कस्यापि). **Sml. P.* 105*b* (anon.). **Saml.* 281 (anon.). **S.-Mukt.* IV. 19 (anon.). **Sūktiratn.* 420 (anon.). [1] *Skm.* °प्रचुर; *S.-Mukt.* °क्वणित. [2] *Viddhaś.* also रि and र; *S.-Mukt.* °चामीकरं. [3] *Sml. P.* °णज्झ; *S.-Mukt.* reads रणध्वनितमेखलोच्छलितचारु°; *Sūktiratn.* समस्तनितमेखलास्फुरिततार°. [4] MS. ता. [5] *Viddhaś.* °डनं; MS. °दितं (*sic*).

२६३ [1] MS. °यन्त्र. [2] MS. च. [3] *Viddhaś.* °धं या and °धं वा.

२६४ [1] MS. का. [2] *Skm.* क्व पेयं ज्योत्स्नाम्भो वदत बिसवल्लीसरणिभिः; so *Sarasvatīk.* with variants वदत and °न. [3] MS. प. [4] *Viddhaś.*, *Skm.* भवतु; *Sarasvatīk.* भवति.

क्व वा पारीमेयो वत वकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात्कुवलयदृशं कल्पयतु ताम् ॥

राजशेखरस्वामी ॥

२६५

*For reff. see below.*

रसवद[1]मृतं कः संदेहो मधून्यपि नान्यथा[2]
मधुरमपि किं[3] चूतस्यापि प्रसन्नरसं[4] फलम् ।
सकृदपि पुनर्मध्यस्थः सन्[5] रसान्तरविज्जनो
वदतु यदि हान्यत्स्वादु[6] स्यात्प्रियादशनच्छदात् ॥

२६६

Vāmana IV. 3, 22 (anon.).

कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं[1]
हसितममृतं हन्त स्वादोः परं रससंपदः[2] ।
विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिना
मलसमधुरैर्लीलातन्त्रैस्त्वया[3]र्धविलोकितैः ॥

२६७

*Sml. P. 105a (राजशेखरस्य)
*Sml. B. 130b. ( ,, ).
*Saml. 280 (anon.).

चञ्चच्चोला[1]ञ्चलानि प्रतिसरणरयव्यस्तवेणीनि बाहो[2]
र्विक्षेपाद्दक्षिणस्य प्रचलितवलयास्फालकोलाहलानि ।

---

२६४ [1] MS. म्प.

२६५ *Skm. II. 626 (कस्यचित्). Sbhv. 1511 (कस्यापि). Vāmana III. 2, 10 (anon.). Sarasvatīk. ad I. 83 (anon.). Hemac. p. 148 (anon.). *S.-Hārāv. C. 60 (anon.). Kāvyapr. ad VII. 7 (anon.). Kāvyaprad. ad VII. 7 (anon.). [1] Hemac., Kāvyapr., Kāvyaprad. अमृतम. [2] S.-Hārāv. मधुनि (sic) मधून्यथो. [3] Sbhv., Hemac. °थ किं; Skm., Vāmana, Sarasvatīk., S.-Hārāv., Kāvyapr., Kāvyaprad. °धिकं. [4] MS. स; S.-Hārāv. द्राचायाश्च प्रसन्नतरं. [5] Skm. स एवा. [6] Sbhv. °स्त्यन्यत्स्वादु.

२६६ [1] Vāmana रसेषु निराकृतः. [2] Vāmana °नां चतुर. [3] MS. स्वि.

२६७ [1] Saml. लोलच्चे. [2] Sml. क.

श्वासत्रुट्यद्वचांसि द्रुतमितरकरोत्क्षिप्तलोलालकानि
स्रस्तस्रञ्जि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि ॥

२६८

प्रहरविरतौ मध्ये वाह्नस्ततो ऽपि परेण वा
किमुत सकले याते ऽप्यह्नि त्वमद्य समेष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पझलज्झलैः ॥

For reff. see below.

२६९ झलज्झलस्य ॥

कल्याणं परिकल्प्यतां पिककुले रोहन्तु वाञ्छाम्रयो
हंसानामुदयो ऽस्तु पूर्णशशिनः स्ताद्भद्रमिन्दीवरे ।
इत्युद्बाष्पवधूगिरः प्रति (fol. 47*a*) पदं संपूरयन्त्यान्तिके
कान्तः प्रस्थितिकल्पितोपकरणः सख्या भृशं वारितः ॥

२७० शृङ्गारस्य ॥

सामान्यवाचि पदमप्यभिधीयमानं
मां प्राप्य जातमभिधेयविशेषनिष्ठम् ।
स्त्री काचिदित्यभिहिते हि मनो मदीयं
तामेव वामनयनां विषयीकरोति ॥

---

२६७ [1] *Sml.* ॰त्क्षेप.

२६८ **Skm.* II. 446 (अमरोः). *Sbhv.* 1048 (झलज्झलिकावासुदेवयोः). *Śp.* 3389 (गलज्जलवसुदेवस्य). **Sml. B.* 61*b* (गलज्जलवसुदेवस्य). Amaru, 12. *Daśar. ad* IV. 59 (अमरुशतके). *Citram.* p. 4 (anon.). *Citrakh.* p. 5 (anon.). **Sabhyāl. B.* II 1*a* (अमरकस्य). [1] *Śp.*, *Sabhyāl.* प्य. [2] *Daśar.* ऽथ. [3] *Skm.*, *Sbhv.*, Amaru वा; *Sabhyāl.* चा; *Daśar.* has दिनकृति गते वास्तं नाथ त्वमद्य समेष्यसि; *Citram.*, *Citrakh.*, *Sabhyāl.* प्रिय त्वमिहैष्यसि. [4] MS. पि. [5] Amaru, *Śp.*, *Daśar.*, *Sabhyāl.* ॰गलज्ज.

२६९ [1] MS. त्ते (*tt*).

## ॥ दूतीवचनव्रज्या ॥

२७१

*Skm. II. 142.

लावण्येन पिधीयते ऽङ्गतनिमा संधार्यते जीवितं
त्वद्ध्यानैः सततं कुरङ्ग[1]कदृशः किंत्वेतदास्ते[2] नवम् ।
निःश्वासैः कुचकुम्भपीठलुठनप्रत्युद्गमान्मांसलैः
श्यामीभूत[3]कपोलमिन्दुरधुना यत्तन्मुखं स्पर्धते ॥

२७२

*Skm. II. 172. Śp. 3488 (कस्यापि).

सोद्वेगा[1] मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
त्रस्ता[2] कोकिलकूजि[3]तादपि गिरं नोन्मुद्र[4]यत्यात्मनः ।
चित्तं[5] दुःसह[6]दा[7]हदायिनि धृतद्वेषापि पुष्पायुधे
बाला[8] सा सुभग त्वयि[9] प्रतिपदं[10] प्रेमाधिकं पुष्यति ॥

शृङ्गारस्यैतौ ॥

२७३

For reff. see below.

विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां चक्रं चन्द्रे सुकृतमयं[1] तस्या मृगदृशः ।
दृशोर्बाष्पः[2] पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥

२७१ [1] MS. रु. [2] MS. ०न्सान्स. [3] MS. ते.

२७२ [1] Śp. नीरागा. [2] MS. त्रृ. [3] Skm., Śp. जि. [4] MS. ०त्सद्व. [5] Skm. दूत्यं. [6] MS. हा with the vowel erased. [7] MS. here inserts ꣸ four times. [8] Skm. मुग्धा. [9] Śp. ०यंप्रति. [10] Skm. मुहुः.

२७३ *Skm. II. 146 (अ(प्र)चलसिंहस्य). Sarasvatīk. ad v. 167 (133) (anon.). *Sml. B. 77b (राजशेखरस्य). [1] Sarasvatīk. य. [2] MS. वा.

२७४

अम्भोरुहं वदनमम्बकमिन्दुकान्तः
पाथोनिधिः कुसुमचापभृतो विकारः ।
प्रादुर्बभूव सुभग त्वयि दूरसंस्थे
चण्डालचन्द्रधवलासु निशासु तस्याः ॥

*Skm. II. 177 (चण्डालचन्द्रस्य).

२७५

वक्त्रेन्दोर्न हरन्ति बाष्पपयसां धारा मनोज्ञां श्रियं
निश्वासा न कदर्थयन्ति मधुरां बिम्बाध[र]स्य द्युतिम् ।
तस्यास्त्वद्विरहे वि(fol. 47b)पक्वलवलीलावण्यसंवादिनी
छाया कापि कपोलयोरनुदिनं तन्व्याः परं शुष्यति ॥
धर्मकीर्तेः ॥

*Skm. II. 141.

२७६

तापो ऽम्भःप्रसृतंपचः प्रचयवान् बाष्पः प्रणालोचितः
श्वासा नर्तितदीपवर्तिलतिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

Viddhaś. II. 21. Sbhv. 1411. As. p. 68 (anon.). Citram. p. 103 (anon.).

२७७

चन्द्रं चन्दनकर्दमेन लिखितं सा माष्टि दष्टाधरा
वन्ध्यं निन्दति यच्च मन्मथमसौ भङ्गाग्रहस्ताङ्गुरीः ।

Viddhaś. II. 20. *Skm. II. 148. *Sml. B. 77b (नन्दनस्य).

२७४ [1] MS. त्व (?).
२७५ [1] MS. क्रो.
२७६ [1] The other texts have दाहो° °तिं. [2] MS. प्प.
[3] Viddhaś. कम्पि; the other texts have प्रेङ्खितदीप्र(Citram. प्र)दीप.
[4] Viddhaś. also °कलि; so Alaṃkāras. and Citram. [5] MS. ग्नं.
[6] Viddhaś. त्वन्मार्ग or तन्मार्ग; the other texts त्वन्मार्ग.
२७७ [1] Viddhaś. सं. [2] Skm. न्धं; Viddhaś. न्धं and न्ध्यं.

[1]काम: पुष्पशर: किलेति सुमनोवर्गं लुनीते च य
त्त्काम्या[2] सुभग त्वया वरतनुर्वातूलतां लम्भिता ॥

राजशेखरस्य ॥

२७८

वपु: शारङ्गाक्ष्यास्तदविरलरोमाञ्चनिचयं
त्वयि स्वप्नावाप्ते स्नपयति पर:[1] स्वेदविसर: ।
बलाकर्षैर्नुट्यद्वलयजकटुत्कारनिनदै
र्विनिद्राया: पश्चादनवरतबाष्पाम्बुनिवहा: ॥

वसुकल्पस्य ॥

२७९

नो शक्या गदितुं स्मरानलदशा यास्यास्त्वयि प्रस्थिते
पत्त्रै: साश्रुसखीजनोपरचिते तल्पे लुठन्त्या मुहु: ।
यल्लिप्तं कुचचन्दनेन सुतनोरद्यापि चन्द्रस्थला
च्छासोड्डीनविशुष्कपाण्डुबिसिनीपत्त्रं दिवि भ्राम्यति

रुद्रस्य ॥

२८०

Sbhv. 1382 (कस्यापि).

प्रकटयति क्षणभङ्गं पश्यति सर्वं जगद्गतं[1] शून्यम् ।
आचरति स्मृतिबाह्यं जाता सा बौद्धबुद्धिरिव ॥

२८१

*Skm. II. 143 (कस्यचित्). Sbhv. 1393 (कस्यापि).

त्वदर्थिनी चन्दनभस्मदिग्ध[1]
ललाटलेखाश्रुजलाभिषिक्ता ।

२७७ [1] *Viddhaś.* transposes lines 2 and 3 of this vers[e]
[2] *Viddhaś.* °त्कामं and °त्कालं.

२७८ [1] MS. here inserts a ।. [2] MS. र्न्नु.

२७९ [1] MS. सु. [2] MS. य.

२८० [1] MS. °तग for °द्ग

२८१ [1] *Sbhv.* ग्धा

मृणालचीरं दधती स्तनाभ्यां
स्मरोपदिष्टं चरति व्रतं सा ॥

२८२

ये निर्दहन्ति दशनश्वसितावलोकैः
क्रूरद्विजिह्वकुटिलाः क्व विलासिनस्ते ।
(fol. 48a)भीष्मोष्मभिः स्मरणमात्रविषैस्तवेय
मव्याल मारयति कापि भुजङ्गभङ्गिः ॥

*Sbhv.* 1400 (भट्टवासुदेवस्य).

२८३

स्वेदापूरविलुप्तकुङ्कुमरसाश्लेषाविलप्रच्छदा
त्तल्पाद्युक्तमनोभवानलशिखालीढादिवाशङ्किता ।
सा बाला बलवन्मृगाङ्ककिरणैरुत्पादितान्तर्ज्वरा
त्वत्संकल्पजडे त्वदङ्कशयने निद्रासुखं वाञ्छति ॥

२८४

धूमेनेव हते दृशौ विसृजतो बाष्पं प्रवाहक्षमं
क्वाथोत्फेनमिवात्तचन्दनरसं स्वेदं वपुर्मुञ्चति ।
अन्तःप्रज्वलितस्य कामशिखिनो दाहार्जितैर्भस्मभिः
श्वासावेगविनिर्गतैरिव तनोः पाण्डुत्वमुन्मीलति ॥
मनोविदस्यैतौ ॥

२८१ [1] MS. च.
२८२ [1] MS. स्व.
२८३ [1] MS. द्दि (*di*), followed by च deleted. [2] MS. नै (*ni*).
२८४ [1] MS. वै. [2] MS. स्वे.

२८५

अत्रैष स्वयमेव चित्रफलके कम्पस्खलल्लेखया
संतापार्त्तिविनोदनाय कथमप्यालिख्य सख्या भवान्।
बाष्पव्याकुलमीक्षितः सरभसं चूताङ्कुरैरर्चितो
मूर्ध्ना च प्रणतः सखीषु मदनव्याजेन चापह्नुतः ॥

बिम्बोकस्य ॥

२८६

सा सुन्दरी तव वियोगहुताशने ऽस्मि
न्नभ्युक्ष्य बाष्पसलिलैर्निजदेहहव्यम्।
जन्मान्तरे विरहदुःखविनाशकामा[1]
पुंस्कोकिलाभिहितमन्त्रपदै[2]र्जुहोति ॥

प्रभाकरस्य ॥

२८७

सुभग सुकृतप्रायो यद्यप्यसि त्वमसावपि
प्रियसहचरी नाधन्यानामुपैति विधेयताम्।
तदलमधुना निर्बन्धेन प्रसीद परस्परं
प्रणयमधुरः सद्भावो वां चिराय विवर्धताम् ॥

वाक्कूटस्य ॥

२८८

*Skm. ii. 166 (राजशेखरस्य).

दोलालोलाः श्वसनमरुतश्चक्षुषी निर्झराभे[1]
[2]तस्याः शुष्य[3]त्तगरसुमनःपाण्डरा (fol. 48b) गण्डभित्तिः ।

---

२८५ [1] MS. सु.
२८६ [1] MS. मां. [2] MS. here inserts ङ three times.
२८८ [1] Skm. also (A.) ढ्ये. [2] Skm. A. here inserts भो; ? a correction (for भे) of the preceding ढ्ये. [3] MS. तु.

तन्नाचाराणां किमिव हि वयं[1] ब्रूमहे दुर्बलत्वं
येषामग्रे प्रतिपदुदिता चन्द्रलेखाप्यतन्वी[2] ॥

२८९

तस्यास्तापभुवं[1] नृशंस कथयाम्येणीदृशस्ते कथं
पद्मिन्याः सरसं दलं विनिहितं यस्याः शमायोरसि ।
आदौ शुष्यति संकुचत्यनु ततश्चूर्णत्वमापद्यते
पश्चान्मुर्मुरतां दधद्दहति च श्वासावधूतं सखीम् ॥

उत्पलराजस्य ॥

*Sml. P. 68b (कस्यापि).
*S.-Hārāv. C. 408 (anon.).

२९०

विषं चान्द्रालोकः कुमुदवनवातो हुतवहः
क्षतक्षारो हारः[2] [स खलु पुटपाको मलयजः ।
अये किंचिद्वक्रे त्वयि सुभग सर्वे कथममी
समं जातास्तस्यामहह विपरीतप्रकृतयः ॥

*Skm. II. 173 (अचलसिंहस्य).

२९१

त्वां चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता
शून्यालिङ्ग]नसंवलद्भुजयुगेनात्मानमालिङ्गति ।
किं चान्यद्विरहव्यथाप्रणयिनी संप्राप्य मूर्च्छां चिरा
त्प्रत्युज्जीवति कर्णमूलपठितैस्त्वन्नाममन्त्राक्षरैः ॥

*Skm. II. 156 (कस्यचित्).
Śp. 3487 (कस्यापि).

---

२८८ [1] Skm. वक्र. [2] MS. त्वी.

२८९ [1] Sml. P., S.-Hārāv. °मह्यं; see exegetical note. [2] Sml. P. °मंब. [3] Sml. P. सतापो. [4] Sml. P. खी; S.-Hārāv. खीः.

२९० [1] Skm. च. [2] Here parts of two verses are omitted; I give the text of Skm.

२९१ [1] Śp. च. [2] Śp. °श्रम.

२९२

गाढावधःकृतबलिचितयौ सुसंङ्गौ
तुङ्गौ स्तनाविति तयोस्तलमागात्[1]।
तस्याः स्फुटं हृदयमित्यपि न स्मरेषू
न्तौ रक्षतः प्रविशतो विमुखो ऽथ वा त्वम्[2]॥

वल्लणस्य ॥

२९३

*Skm. II. 162 (वाचस्पतेः). Daśar. ad II. 27 (anon.). *Saml. 103 (anon.).

मृगशिशुदृशस्तस्या[स्ता]पं कथं कथयामि ते
दहनपतिता दृष्टा मूर्त्तिर्मया न हि वैधवी।
इति तु नियतं[1] नारीरूपः स लोकदृशां[2] प्रिय[3]
स्तव[4] शठतया[5] शिल्पोत्कर्षो विधेर्विघटिष्यते ॥

२९४

*Skm. II. 158.

पुनरुक्तावधि वासरमेतस्याः कितव पश्य गणयन्त्याः।
इयमिव करजः[1] क्षीणस्त्वमिव कठोराणि पर्वाणि ॥

धरणीधरस्य ॥

---

२९२ [1] MS. स. [2] MS. च.

२९३ [1] Daśar., Saml. विदि. [2] MS. शा. [3] Daśar., Saml. सुधा. [4] MS. स (?). [5] Skm. या.

२९४ [1] Skm. A. ज.

## ॥ संभोगव्रज्या ॥

२९५

प्रौढप्रेमरसान्वितश्लथफलकाञ्चिस्रंसिते ऽप्यंशुके
काञ्चीदाममणिप्रभाभिरनु चारब्धे दुकूलान्तरे।
कान्तेनाशु सुधाविलोकितमथो तन्व्या मुधा लज्जि .
. . . . . . . ॥

२९६

[कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना[1] *For reff. see below.*
द्वासश्च[2] श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम्।
एतावत्सखि वेद्मि केवलमहो[5] तस्याङ्गसङ्गे पुनः
को ऽसौ कास्मि रतं च किं सखि शपे[7] स्व] (fol. 50*a*)
ल्पापि मे न स्मृतिः ॥

\ विकटनितम्बायाः ॥

---

२९५ [1] MS. श्रं. [2] MS. त्ति. [3] *Sic* MS. (for शुचा? cf. 326, *c*). [4] MS. थौ.

२९६ **Skm.* II. 696. *Sbhv.* 2147 (अमरुकस्य). **Sml. P.* 125*a* (अमरुकस्य). Amaru, 101. *Sarasvatīk. ad* v. 150 (anon.). *Daśar. ad* II. 17 (anon.). *Rasamañjarī* 15. *Vetālap.* p. 49. Hemac. p. 94 (anon.). **S.-Mukt.* I. 92 (anon.). **S.-Ślokāḥ* 8*a* (anon.). [1] *Rasam.*, *S.-Ślokāh* तत्क्षणा. [2] *Sbhv.*, Hemac., *Rasam.*, *S.-Ślokāḥ* तद्वासः; *Daśar.* वासः प्र; Amaru, *S.-Mukt.*, *Vetālap.* वासो वि. [3] *Sbhv.* ०लं कर. [4] *Sml. P.* प्प्स (!). [5] *Sbhv.*, *Daśar.*, *Rasam.*, *Sml. P.*, *S.-Mukt.* हं; Amaru, Hemac. सांप्रतमहं; *Vetālap.* वेद्म्यहं रसवसात्. [6] *S.-Mukt.* क्का. [7] *Sbhv.*, Amaru नु वा कथमिति; *Daśar.* नु किं कथमिति; *Rasam.*, Hemac. नु किं कथमिति; *Vetālap.* तु वा कथमिति; *S.-Mukt.* नु किं कथमपि; *S.-Ślokāḥ* तु०.

२९७

अतिप्रौ[1]ढी रात्रिर्ब[2]हलशिखदीपः प्रभवति
प्रियः प्रेमारब्ध[3]स्मरविधिरसङ्गः परमसौ ।
सखि स्वैरं स्वैरं सुरतमकरोद्व्रीडितवपु
र्यतः पर्यङ्को[4]ऽयं रिपुरिव कटुत्का[5]रमुखरः ॥

२९८

For reff. see below.

धन्यासि यत्क[1]थयसि प्रियसंगमेन[1]
नर्मस्मितं च वचनं च रसं च तस्य[2] ।
नीवीं प्रति प्रणिहिते तु करे[3] प्रियेण
सख्यः[4] शपा[5]मि यदि किंचिद[पि] स्मरामि ॥

विद्यायाः ॥

२९९

जयति समरतान्तान्दोलनापाण्डुगण्ड
स्थलकृतनिजवासस्वेदपूरानुजन्मा ।
श्ल[1]थतनुभुजबन्धप्राप्तदीर्घप्रसारो
मुखपरिमलमुग्धः कान्तयोः श्वासवातः ॥

---

२९७ [1] MS. प्रौ. [2] MS. व. [3] Read ब्धः? [4] MS. ङ्को. [5] MS. °वड(or ड?)त्का.

२९८ *Skm. II. 697. Sbhv. 2142 (कस्यापि). Śp. 3746 (विज्जकायाः). Kāvyapr. ad IV. 40 (anon.). Sāhityad. pp. 41–2 (anon.). Ak. p. 166 (anon.). Kāvyaprad. ad IV. 18 (anon.). Arjunavarman ad Amaru 101 (anon.). *S.-Ratnak. v. 188 (anon.). *S.-Prabandha. 55 (anon.). [1] The other texts have या कथ° (except S.-Prabandha. मां°) and °मेऽपि. [2] Śp. नर्मोक्तिचाटुकशतानि रतान्तरेषु; Sbhv., Kāvyapr., Sāhityad., Ak., S.-Ratnak., Kāvyaprad., S.-Prabandha. विस्रब्धचाटुक°. [3] Sbhv. °हितस्य करः. [4] Sbhv. स्वी. [5] MS. या.

२९९ [1] MS. ग्ल.

३००

मनोजन्मप्रौढव्यतिकरशतायासविधिषु
प्रियः प्रायो मुग्धो झगिति[1] कृतचेतोभवविधिः ।
सहूंकारोज्जृम्भा स्मरपरवशा कान्तविमुखं
मुखं[2] मुग्धापाङ्गा[3] क्षिपति विरसप्रौढयुवती ॥

३०१

नवनवरहोलीलाभ्यासप्रपञ्चितमन्मथ
व्यतिकरकलाकल्लोलान्तर्निमग्नमनस्कयोः ।
अपि तरुणयोः किं स्यात्तस्यां दिवि स्पृहयालुता
मुकुलितदृशोरुज्झिद्यन्ते न चेद्विरहत्विषः ॥

३०२

तस्यापाङ्गविलोकितस्य मधुरप्रोल्लासितार्धभ्रुव
स्तस्य स्मेरशुचेः क्रमस्य च गिरां मुग्धाक्षराणां ह्रिया ।
भावानामपि तादृशां मृगदृशो हावानुगानामहो
नाधन्यः कुरुते प्ररूढपुलकैरातिथ्यमङ्गैर्जनः ॥

मनोविनोदस्यै(fol. 50b)तौ ॥

३०३

समाकृष्टं वासः कथमपि हठात्पश्यति मयि[1]
क्रमादूरुद्वंद्वं जरठशरगौरं मृगदृशः ।
तया दृष्टिं दत्त्वा[2] महति मणिदीपे निपुणया
निरुद्धं हस्ताभ्यां झगिति मम[3] नेत्रोत्पलयुगम् ॥

Śp. 3677 (कस्यापि).
*Sabhyāl. IV. 124 (कस्यापि).

---

३०० [1] MS. ते (ti). [2] MS. खा. [3] MS. ङ्ग.

३०१ [1] MS. ल.

३०३ [1] MS. पि; Śp. reads तदा; so also Sabhyāl. [2] MS. त्वौ (corrected?); Sabhyāl. त्र(?)त्वा. [3] Śp. निज; so Sabhyāl. [4] MS. त्रौ (corrected?).

३०४

अनल्पं संतापं शमयति मनोजन्मजनितं
तथा शीतं स्फीतं हिमवति निशीथे ग्लपयति ।
तदेवं[1]को ऽप्यूष्मा रमणपरिरम्भोत्सवमिल
त्पुरन्ध्रीनीरन्ध्रं[2]स्तनकलशजन्मा विजयते ॥

३०५

*Skm. II. 667 (सोह्लोकस्य).

ना[1]धन्यान्विपरीतं[2]मोहनर[स]प्रेङ्खन्नितम्बस्थली
लालङ्[3]गूषणकिङ्किणीकलरवव्यामिश्रकण्ठस्वनम् ।
सं[4]रम्भं[5]श्लथकेशबन्धविगलन्मुक्ताकलापद्रुत[6]
श्वा[7]सच्छेदतरङ्गितस्तनयुगं प्रीणाति शृङ्गारिणी ॥
सोनोकस्य ॥

३०६

*Skm. II. 694 (कस्यचित्).

शीत्कारवन्ति दरमीलितलोचनानि
रोमाञ्चमुञ्चि तनुघर्मकणावलीनि ।
एणीदृशां मकरकेतुनिकेतनानि
वन्दामहे सुरतं[1]विभ्रमचेष्टितानि ॥

३०७

मुहुर्व्रीडावत्याः प्रतिहसितवत्याः प्रतिमुहु
र्मुहुर्विश्रान्ताया मुहुरभिनिविष्टव्यवसितेः ।
श्रमाम्भोभिस्तिम्यत्तिलकमलि[1]काघूर्णदलकं
मुखं लीलावत्या हरति विपरीतव्यतिकरे ॥
सुरभेः ॥

---

३०४ [1] Or श्लथ? [2] MS. स्वृ?

३०५ [1] MS. मा. [2] *Skm.* also (A.) परिवी. [3] *Skm.* also (A.) ०लंभू. [4] MS. स. [5] *Skm.* also (A.) भा. [6] *Skm.* त्रुट. [7] *Skm.* च्छ्वा.

३०६ [1] Corrected from ति.

३०७ [1] MS. ले (*li*).

३०८

आस्तां दूरेण विश्लेषः प्रियामालिङ्गतो मम ।
स्वेदः किं न सरिन्नाथो रोमाञ्चः किं न पर्वतः ॥

Sbhv. 2087 (कस्यापि). Śp. 3679 („).

३०९

[1]चिरारूढप्रेमप्रणयपरिहासेन हृतया
तदारब्धं तन्व्या न तु यदबलायाः समुचितम् ।
अनिर्व्यूढे तस्मिन् प्रकृतिसुकुमाराङ्गलतया
पुनर्लज्जालोलं मयि विनिहितं लोचनयुगम् ॥

*Skm. II. 675 (कोकस्य). Sbhv. 2129 (कस्यापि).

३१०

नखदशननिपातजर्जराङ्गा
रतिक(fol. 51a)लहे परिपीडिता प्रहारैः ।
सपदि मरणमेव सा तु[1] याया
यदि न पिबेदधरामृतं प्रियस्य ॥

Sbhv. 2126 (क्षेमेन्द्रस्य).

३११

मुग्धे तवास्मि दयिता दयितो[1] भव त्व
मित्युक्तया न हि न हीति शिरो ऽवधूय ।

For reff. see below.

---

३०८ [1] MS. ङ्गि. [2] MS. ०रिंना.

३०९ [1] *Skm.* reads *a–b*

पुरारूढप्रेमप्रबलरसरागेण कृतया
समारूढं कर्तुं न हि यदबलाभावसदृशम् ।

[2] MS. ०दृयात्त. [3] MS. व्यू.

३१० [1] *Sbhv.* यदिह मरणमेव किं न; MS. त्त for तु?

३११ *Sbhv.* 2128 (शशिवर्धनस्य). *Śp.* 3699 (कस्यापि). **Sml. P.* 119*a* (कस्यापि). **Saml.* 187 (anon.). **Sabhyāl.* IV. 162 (anon.).
[1] *Śp.*, *Sml. P.*, *Saml.*, *Sabhyāl.* पुरुषो.

स्वस्मा[1]त्करान्मम[2] करे वलयं क्षिपन्त्या[3]
वाचं विनाभ्यु[4]पगमः कथितो मृगाक्ष्या ॥

३१२

Sbhv. 2120. Śp. 3695. *Sml. B. 147b.

पततु तवोरसि सततं दयिताधम्मिल्लमल्लिकाप्रक[1]रः ।
रति[2]रसं[3]भसकचग्रहलुलितालकव[4]ल्लरीगलि[5]तः ॥

बाणस्य ॥

३१३

*Skm. II. 676 (राजशेखरस्य).

आवृण्वाना झगि[1]ति जघनं मृदुकूलाञ्चले[2]न
प्रेङ्खन्क्रीडाकुलि[3]तकवरीबन्धनव्यग्रपाणिः ।
अर्धोच्छ्वासस्फुटनखपदालंकृताभ्यां स्तनाभ्यां
दृष्टा धार्ष्ट्यस्मृतिनत[4]मुखी मोहनान्ते मया सा[5] ॥

अभिनन्दस्य ॥

३१४

हरति रतिविमर्दे लुप्तपत्त्राङ्कुरत्वा
प्रकटनखपदाङ्कः किं च रोमाञ्चमुद्रः ।
हरिणशिशुदृशो ऽस्या [मुग्ध]मुग्धं हसन्त्याः
परिणतशरकाण्डस्निग्धपाण्डुः कपोलः ॥

वीर्यमित्रस्य ॥

---

३११ [1] *Sbhv.* स्वं स्वा. [2] *Śp.*, *Sml. P.*, *Saml.* °त्प्रिय; *Sabhyāl.* °त्प्रियतमे. [3] MS. न्त्य corrected (?). [4] *Sabhyāl* प्यु.

३१२ [1] *Śp.* नि. [2] *Śp.* त. [3] *Sbhv.* ण. [4] Inserted by revisor of MS. [5] *Sbhv.* °पति.

३१३ [1] *Skm.* टि. [2] MS. ने. [3] *Skm.* प्रेङ्खल्लीलालुलि. [4] *Skm.* धार्ष्ट्यादवनत°; MS. दा for धा. [5] *Skm.* सा मया मोहनान्ते.

३१५

करकिशलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति करैः[1] पत्युर्नेत्रं[2] विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितुम्[3] ॥

For reff. see below.

३१६

विश्रान्तिं नूपुरे याते[1] श्रूयते रसना[2]ध्वनिः ।
प्रायः कान्ते[3] रति[4]श्रान्ते कामिनी पुरुषायते ॥

Śp. 3696 (कस्यापि). *Sabhyāl. IV. 161 ( „ ).

३१७

भावोन्गाढमुपोढकम्पपुलकै[1]रङ्गैः समालिङ्गितं
रागाच्चुम्बितमभ्यु[2]पेत्य वदनं पीतं च वक्त्रामृतम्[3] ।
जल्पन्त्यैव मुहुर्न नेति निभृतं प्रध्वस्त[4]चारित्रया
निःशेषेण समापितो रतं[5]विधि[6]र्वाचा तु नाङ्गीकृतः ॥

*Skm. II. 662 (कस्यचित्).

---

३१५ *Skm. II. 677 (कस्यापि). Sbhv. 2105 (कस्यापि). Śp. 3706 (अमरुकस्य). Vāmana ad v. 2, 8 (anon. first pāda only). *S.-Muktāv. XVIII. 3 (anon.). *S.-Mukt. I. 95 (anon.). *Sml. B. 148b (अमरुकस्य). Homac. p. 314 (anon.). [1] Skm. कर; Sbhv., Śp., S.-Muktāv., S.-Mukt., Homac. मुह्नः. [2] Skm., Sbhv., Śp., S.-Muktāv., S.-Mukt., Homac. नै. [3] Sbhv. नारी पुनः पतिमाश्रिता; Śp. तन्वी पुनः°; MS. मुर्हमु; S.-Muktāv. °चते; S.-Mukt. °चिता.

३१६ [1] Śp. प्रशान्ते नूपुरारावे; Sabhyāl. °नूपुराभावे. [2] Śp., Sabhyāl. मेखला. [3] Apparently corrected from न्ति. [4] Śp. कान्ते नूनं रति°; Sabhyāl. omits नूनं.

३१७ [1] MS. सु. [2] Skm. प्यु; MS. स्यु. [3] MS. °त्पान्त्यै. [4] Skm. प्रस्तब्ध. [5] MS. विा. [6] MS. भ.

३१८

यत्पीनस्तनभारलालसलसद्बासःस्फुरत्गण्डया
तन्व(fol. 51b)ङ्ग्या रभसार्पितं सरभसं[1] वक्त्रं[2] मुहुः पीयते ।
तच्छ्लाघ्यं सुरतं च तत्तदमृतं तद्वस्तु तद्ब्रह्म त
च्चेतोहारि तदेव तत्किमपि तत्तत्स्यान्तरं सर्वथा ॥

३१९

न वत विधृतः काञ्चीस्थाने करः श्लथवाससि[1]
प्रहितमसकृद्दीपे[2] चक्षुर्घनस्थिरतेजसि ।
कुचकलशयोरूढः कम्पस्तया मम संनिधौ[3]
मनसिंजरुजो भावैरुक्ता वचोभिरपह्नुताः ॥

अभिनन्दस्य ॥

३२०

*Skm. ii. 699 (प्र(ञ B.)च ल्दासस्य).

हर्षाम्बु[1]दूषितविलोचनया मयाद्य
किं तस्य तत्सखि[2] निरूपित[3]मङ्गमङ्गम् ।
रोमाञ्चकञ्चुकति[4]रस्कृतदेहया वा
ज्ञातानि तानि परिरम्भसुखानि किं वा ॥

अचलस्य ॥

३२१

स कस्मान्मे प्रेयान् सखि कथमहं तस्य दयिता
यतो मां स्पृष्ट्वै[1]व स्नपयति करं स्वेदपयसा ।

---

३१८ [1] MS. भ्र or च्र? [2] MS. ह.
३१९ [1] MS. से (si). [2] MS. inserts त (after क्ष). [3] MS. से (si).
३२० [1] *Skm.* °पूरि. [2] *Skm.* त्स. [3] MS. पे (pi). [4] MS. ते (ti).
३२१ [1] MS. पृ.

विलोक्याश्लेषादप्यवहित इवामील्य नयने
व्युदञ्चद्रोमाञ्चस्थगितवपुरालिङ्गति स माम्[1] ॥

३२२

किमपि किमपि मन्दं मन्दमासत्तियोगा
दविचलितकपोलं[3] जल्पतोश्च[4] क्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो
रविदितगतयामा रात्रिरेवं[7] व्यरंसीत् ॥

भवभूतेः ॥

*Uttarar.* I. 27. *Daśar. ad* IV. 63. **Sml. B.* 147a. **Sabhyāl.* (fol. xa). **S.-Prab.* 81 (anon.).

३२३

दाक्षिण्यादभिमानतो रसवशाद्विश्रामहेतोर्मम
प्रागल्भ्याद्यदनुष्ठितं मृगदृशा शक्यं न तद्योषिताम् ।
निर्व्यूढं न यदा तया तदखि[लं खि]न्नैस्त्वरत्तारकैः
सव्रीडैश्च विलोकितैर्मयि पुनर्न्यस्तः समस्तो भरः ॥

**Skm.* II. 674 (महाकवेः).

---

३२१ [1] MS. मा.

३२२ [1] Aiyar's edition of *Uttarar.* reads त्ति ; other editions agree with MS. ; *S.-Prab.* त्ति. [2] *Uttarar., Daśar., S.-Prab.* र. [3] MS. त. [4] *Uttarar., Daśar, Sabhyāl., S-Prab.* जल्पतोरक्र°. [5] *Uttarar.* also सपुलक° ; so *Daśar., Sabhyāl.* [6] MS. ति. [7] *Uttarar., Daśar., Sabhyāl., S.-Prab.* व, concerning which reading, fabled to have been suggested by Kālidāsa, see Bhandarkar's *Mālatīmādhava*, pp. vi, vii.

३२३ [1] *Skm.* तु. [2] *Skm.* त्त. [3] MS. क्य. [4] *Skm.* य. [5] MS. व्यू. [6] *Skm.* °वता°. [7] MS. न्य.

३२४

वलितमनसोरप्यन्योन्यं समावृतभावयोः
पुनरुपचितप्राय[1]प्रेम्णोः पुनस्त्रपमाणयोः ।
इह हि निविडव्रीडानङ्गज्वरातुरचेतसो
र्नवतरुणयोः को जानीते किमद्य फलिष्यति ॥

लच्मी(fol. 52 missing)[धरस्य][2] ॥

---

३२४ [1] *Sic* MS. (for य ?). [2] Fol. 53*a* begins with चीयत (for व्रीयते, end of the verse *Sbhv.* 2099) ॥ भट्टश्रीशिवस्वामिनः ॥

॥ समाप्तनिधुवनचिह्नव्रज्या ॥

३२५

राजन्ति[1] कान्तनखरक्षतयो[2] मृगाक्ष्या
लाक्षा[3]रसद्रवमुचः कुचयोरुपान्ते ।
अन्तःप्रवृद्धमकरध्वजपावकस्य
शङ्के विभि[4]द्य हृदयं निरगुः[5] स्फुलिङ्गाः ॥

राजशेखरस्य ॥

*Skm. II. 636 (कस्यापि).

३२६

जयन्ति कान्तास्तनमण्डलेषु
विटार्पितान्यार्द्रनखक्षतानि ।
लावण्यसंभारनिधानकुम्भे
मुद्राक्षराणीव मनोभवस्य ॥

*Skm. II. 637 (कस्यचित्).

३२७

क्वचित्ताम्बूलाङ्कः[1] क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारः[2] क्वचिदपि च सालक्तकपदः ।

For reff. see below.

---

३२५ [1] MS. न्ति. [2] Skm. °चताया (sic). [3] MS. क्षा. [4] MS. भि (bhi). [5] Skm. नि(for वि)विगुः (A.) and निरगुः (B.); MS. °जगुः.

३२७ Sbhv. 2131 (कस्यापि). Śp. 3700 (कस्यापि). Sāhityad. p. 42 (anon.). Daśar. ad II. 17 (anon.). Amaru, 107. [1] Sbhv., Śp., Sāhityad., Daśar., Amaru ङ्कः. [2] MS. य. [3] Sbhv., Śp., Sāhityad., Daśar., Amaru री.

बलीभङ्गाभोगेष्व[1]लकप[2]तिताकीर्ण[3]कुसुमः
स्त्रियाः सर्वा[4]वस्थं कथयति रतं[5] प्रच्छदपटः ॥

३२८

*Skm. II. 638 (कस्यचित्).
*Sabhyāl. I. 106 (anon.).

पीनतुङ्गकठिनस्तना[1]न्तरे
कान्तदत्तमबला नखक्षतम्[2] ।
आवृणोति विवृणोति चेक्षते[4]
लब्धरत्नमिव दुःखितो[5] जनः[6] ॥

३२९

*Skm. II. 704 (भवभूतेः).

उर[1]सि गुरुसमक्षं[2] लज्जमाना मृगाक्षी
र[3]तिरुतमनुकर्तुं राजकीरे प्रवृत्ते ।
तिरयति शिशुलीलानर्तनच्छद्मताल
प्रचल[4]वल[य]मा[5]लास्फालकोलाहलेन ॥

३३०

प्रदोषे दम्पत्योर्निजरुजि विभिन्ने प्रणयिनो
र्वि[1]भिन्ने सं[2]पन्ने घनतिमिरसंकेतगहने ।
रतौत्सुक्यात्ताम्यत्तरलमनसोः पर्यवसिते
कृतार्थत्वे[3]ऽन्योन्यं तदनु विदितौ किं नु कुरु[4]ताम् ॥

---

३२७ [1] *Śp.*, *Sāhityad.*, *Daśar.*, Amaru ॰गैर. [2] MS. य. [3] *Śp.* ॰तैः की ; *Sāhityad.*, *Daśar.*, Amaru ॰तैः र्णी. [4] Amaru नाना. [5] MS. भं.

३२८ [1] *Skm.* also (B.) ॰गुणा. [2] MS. तः. [3] MS. ॰दृशी. [4] *Skm.*, *Sabhyāl.* वीक्षते. [5] *Sic* MS. (for दुःस्थितो 'poor'?); *Skm.*, *Sabhyāl.* निर्धनो. [6] In *Sabhyāl.* *c-d* precede *a-b*.

३२९ [1] MS. द्रव, द्र and उ being easily confused. [2] MS. वं. [3] *Skm.* also (A.) प्र. [4] MS. य, a mistaken correction (of व ?), due to the following omitted य. [5] MS. वा : read वाद्या॰ ?

३३० [1] MS. भे (*bhi*). [2] MS. स. [3] MS. ॰त्वे च. [4] MS. र.

३३१

पश्यसि न(fol. 53b)खसंभूतां रेखां वरतनु पयोधरोपान्ते ।
किं[1] वाससा स्तनान्तं रुणत्सि हिमरुचिकृतेवाह्निं[2] ॥

३३२

यद्रात्रौ रहसि व्यपेत[1]विनयं दृष्टं[2] रसात्कामिनो
रन्योन्यं शयनीयमीहितरसव्याप्तिप्रवृत्तस्पृहम् ।
तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थि[4]तम् ॥

Sbhv. 2212 (अमरुकस्य). Śp. 3741 ( „ ).

३३३

किं भूषणेन रचितेन हिरण्मयेन
किं[1] रोचनादिरचितेन विशेषकेण ।
आर्द्राणि कुङ्कुमरुचीनि विलासिनीना
मङ्गेषु किं नखपदानि न मण्डनानि ॥

Sbhv. 2165 (भट्टकुमारस्य).

३३४

दंपत्योर्निशि जल्पितं गृहशुके[ना]कर्णितं यद्वचः
प्रातस्तद्गुरुसंनिधौ[1] निगदतस्तस्यैव तारं[2] वधूः ।

For reff. see below.

३३१ [1] MS. कें (kiṃ). [2] MS. °वह्नि.

३३२ [1] MS. ये. [2] Sbhv., Śp. वृत्तं. [3] Sbhv., Śp. °सावा. [4] MS. त्स्थे (tsthi).

३३३ [1] MS. कि.

३३४ *Skm. II. 705 (अमरोः). Sbhv. 2214 (कस्यापि). Śp. 3743 (कस्यापि). Amaru, 16. Kuvalay. ad 155 (anon.). Ak. p. 358 (anon.). *Sabhyāl. IV. ad fin. (22a) (अमरुकस्य). *S.-Mukt. I. 28 (anon.). *S.-Prab. 60 (anon.). [1] All the other texts °ल्पतोर्गृ. [2] S.-Mukt. प्रायस्त°; Skm. also (A.) तत्प्रातर्गु, which the other texts all read. [3] Skm. °स्योपहारं; Sbhv., Śp., Kuvalay., Śṛṅgāradīpikā ad Amaru, 16 °स्यातिमात्रं; Amaru, S.-Prab. श्रुत्वैव तारं.

हाराकर्षित[1]पद्मरागशकलं विन्यस्य चञ्चोः पुरो[2]
व्रीडार्त्ता प्रकरोति[3] दाडिमफलव्याजेन वाग्बन्धनम् ॥

३३५

*Skm. II. 701 (डिम्बोकस्य). Amaru, 117.

प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं
मया वाच्यं नोच्चैरिति गृहशुके जल्पति शनैः।
वधूवक्त्रं[1] व्रीडाभरन[2]मितमन्तर्विहसितं
हरत्यर्धोन्मीलन्नलिनमनिला[3]वर्जितमिव ॥

३३६

*Skm. II. 639 (कस्यचित्).

नखक्षतं यन्नवचन्द्रसंनिभं
स्थितं कृशाङ्गि स्तनमण्डले तव।
इदं तरीं[1]तुं त्रिबलीतरङ्गिणी[2]
वि[3]राजते पञ्चशरस्य नौरिव ॥

३३७

*Skm. II. 116 (कस्यचित्).

हंहो कान्त रहोगतेन भवता यत्पूर्वमावेदितं
निर्भिन्ना तनुरावयोरिति मया तज्ज्ञातमद्य स्फुटम्।
कामिन्या स्मरवेदनाकु(f. 54a)[ल]दृशा[1] यः केलिकाले कृतः
सो ऽत्यर्थं कथमन्यथा द[2]हति मामेष त्वदोष्ठव्रणः ॥

---

३३४ [1] *Skm.* कर्णालंकृत; *Sbhv.*, *Śp.*, Amaru, *Kuvalay.*, *Ak.*, *S.-Mukt.*, *Sabhyāl.*, *S.-Prab.* कर्णावलम्बित. [2] *Skm.*, *Kuvalay.*, *Śṛṅgāradīpikā ad* Amaru, *S.-Mukt.* चञ्चूपुटे; *Sbhv.*, *Śp.*, Amaru चञ्चोः पुटे; *S.-Prab.*, *Sabhyāl.* चंचोः पुटे (*sic*). [3] *Kuvalay.*, *Ak.*, *Śṛṅgāradīpikā* विदधाति.

३३५ [1] Amaru वो. [2] MS. म. [3] *Skm.* ०लिना.

३३६ [1] MS. र्तं. [2] MS. णी. [3] MS. द्वि (for स्वि?).

३३७ [1] *Skm.* ज्ञा. [2] *Skm.* तु(नु?)द.

३३८

*Anarghar.* VII. 107.

अभिमुखपतयालुभिर्ललाट
श्रमसलिलैरविधौतपत्त्रलेखः ।
कथयति पुरुषायितं वधूनां
मृदितहिमद्युतिदुर्मना: कपोलः ॥

मुरारेः ॥

३३९

*Śiśupālavadha* XI. 29.

नखपदबलिनाभीसंधिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः ।
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥

३४०

*Śiśupālavadha* XI. 34. *Sbhv.* 2171. *Daśar. ad* II. 23; IV. 55 (anon.). *Sāhityad.* p. 82 (anon.). *At.* p. 64 (anon.).

द्रवनखपदभङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पे
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥

माघस्यैती ॥

३३८ [1] MS. ति. [2] MS. °सुच. [3] *Anargh.* °वधू. [4] *Anargh.* also °निर्मल:.

३३९ [1] MS. मा. [2] MS. मु; read गुह्यसि, though the word is not known elsewhere? [3] MS. नी.

३४० [1] All other texts न and म respectively: see Exegetical Notes at end. [2] *Sbhv.*, *At.* मुक्त. [3] MS. ग. [4] *Sbhv.* न्वद. [5] MS. स्ये.

३४१

*Skm. II. 640.

काश्मीरपङ्कखचितस्तनपृष्ठताम्र
पट्टावकीर्णदयितार्द्रनखाक्षराली[1]।
एणीदृशः कुसुमचापपरेन्द्र[3]दत्त
तारुण्यशासनमिव प्रकटीकरोति ॥

दक्षस्य ॥

३४२

अधर[1]पद्मरागो ऽयमनर्घः सव्रणो ऽपि[2] ते।
मुग्धे हस्तः किमर्थो ऽयमपार्थे[3] इह दीयते ॥

३४३

दरस्रावं[1] वासो लुलितकुसुमालंकृति[2] शिरः
श्रथालोकं चक्षुः सरसनखलेखाङ्कितमुरः।
लसत्काञ्चीग्रन्थिस्फुरदरुणरत्नांशु जघनं
प्रियाङ्गोन्मृष्टाङ्ग्या विष[3]मिदमियज्ञा[4]वकनृणाम् ॥

वर्लुणस्य ॥

३४४

*Skm. II. 702 (मार्जारस्य).

प्रत्यूषे गुरुसंनिधौ गृहशुके तत्तद्रहोजल्पितं
प्रस्तोतुं[1] परिहासकारिणि पदैरर्धोदितैरुद्यते।
क्रीडाशारिकया निलीय निभृतं त्रातुं चपा[2]र्त्तां वधूं
प्रारब्धः सहसैव संभ्रमकरो मार्जारगर्जारवः ॥

---

३४१ [1] *Skm.* also °णी (B.). [2] *Skm.* °खचताना and °ली (*sic*). [3] *Skm.* °नवेन्द्र (for नरेन्द्र ?).

३४२ [1] MS. रः. [2] MS. पि. [3] MS. र्थः.

३४३ [1] *Sic* MS. [2] MS. ते (*ti*). [3] For suggestions as to the reading here see Exegetical Notes. [4] MS. ग्य.

३४४ [1] MS. स्तुं. [2] MS. °या°; *Skm.* भया and (B.) चपा.

३४५

तल्पे[1] चम्पककल्पिते सखि गृहोद्याने ऽद्य (fol. 54b) सुप्ता-
  सि किं
तत्किञ्जल्कचयं न पश्यसि कुचोपान्ते विमर्दारुणम् ।
आः किं छद्मविदग्धमानिनि मयि ब्रूषे पुरोभागिनि
क्रूरैरुल्लिखितास्मि तत्र कुसुमान्युच्चिन्वती कण्टकैः ॥

सोन्नोकस्य ॥

३४६

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदल
त्तमिस्रामर्माणं किरणकणिकामम्बरमणिः ।
इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥

*Anarghar.* IV. 3.

३४७

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी
र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो
श्चमत्कारो गूढं करजपदमासां कथयति ॥

मुरारेरेतौ ॥

*Anarghar.* IV. 6.
Jayaratha *ad As.* p. 76 (anon.).
**Saml.* 68 (anon.).

---

३४५ [1] MS. तुल्ये.
३४६ [1] MS. आ. [2] MS. पु.
३४७ [1] MS. सि ; cf. Pāṇini, v. 4, 81. [2] Jayar. कथ°.
[3] MS. ले (*li*).

## ॥ मानिनीव्रज्या ॥

### ३४८

*Śp.* 3547 (anon.). *Sarasvatīk. ad* v. 176 (anon.). **Sabhyāl. B.* 4*b* (anon.).

मानोन्नतेत्य[सहनेत्य]तिपरिडतेति
मय्येव धिक्कृ[1]तिरनेकमुखी सखीनाम् ।
आकार[2]मात्रमसृणेन विचेष्टितेन
धूर्तस्य तस्य हि[3] गुणानुपवर्ण[4]यन्ति ॥

लक्ष्मीधरस्य ॥

### ३४९

**Skm.* II. 226 (अमरोः). *Sbhv.* 1575. **Sml. B.* 102*b*.

वलतु[1] तरला धृष्टा दृष्टिः खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।
तदपि न मया संभाष्यो[2] ऽसौ पुनर्दयितः[3] शठः
स्फुटति हृदयं मौ[4]नेनान्तर्न मे यदि तत्क्षणात् ॥

अमरुकस्य ॥

### ३५०

*Sbhv.* 1577 (कस्यापि). *Śp.* 3538 (संकुलस्य). **Sabhyāl.* 30*a* ( ,, ).

तदेवाजिह्माक्षं मुखमविष[1]दास्ता गिर इमाः
स एवाङ्गाक्षेपो[2] मयि सरसमालिङ्गति[3] तनुम् ।

---

[1] MS. न.

३४८ [1] MS. कृय ? [2] *Śp., Sabhyāl., Sarasvatīk.* दाक्षिण्य. [3] *Sarasvatīk.* तु. [4] *Sarasvatīk.* °रज्ञ.

३४९ [1] *Sbhv., Sml. B.* च. [2] *Skm., Sbhv.* °च्यो. [3] MS. here inserts शतः (dittography). [4] *Sbhv.* मा.

३५० [1] *Sbhv., Śp., Sabhyāl.* श. [2] *Śp., Sabhyāl.* °श्लेषो. [3] MS. त; *Sbhv., Śp., Sabhyāl.* °श्लिष्यति.

यदुक्तं [प्रत्युक्तं] तदपटु शिरःकम्पनपरं
प्रिया मानेनाहो पुनरपि कृता मे नववधूः ॥

शम्बूकस्य ॥

३५१

यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका
यदि विरचितो मौने यत्नः किमु (fol. 55a) स्फुरितो ऽधरः।
यदि नियमितं ध्याने चक्षुः[1] कथं पुलकोद्गमः
कृतमभिनयैर्दृष्टो[2] मानः प्रसीद विमुच्यताम् ॥

अमरुकस्य ॥

*Skm. II. 244 (अमरोः). Sbhv. 1625.

३५२

एकत्रासनसंस्थितिः[3] परिहृता प्रत्युद्गमाद्दूरत
स्ताम्बूलाहरणच्छलेन रभसाश्लेषक्रमो[5] विघ्नितः।
संलापो[6]ऽपि न मिश्रितः[8] परिजनं व्यापारयन्त्यान्तिके[9]
भर्तुः[10] प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥

श्रीहर्षस्य[11] ॥

For reff. see below.

३५० [1] *Sabhyāl.* य.

३५१ [1] *Sbhv.*, Amaru चेतः. [2] *Skm.* also (A.) र्दृ.

३५२ **Skm.* II. 217 (अमरोः). *Sbhv.* 1583 (पुलिनस्य). *Śp.* 3534 (कस्यापि). Amaru, 18. *Sāhityad.* p. 44 (anon.). *Daśar.* *ad* II. 18 (अमरुशतके). *Sarasvatīk.* *ad* v. 170 (anon.) *Rasataraṅgiṇī* v. *ad fin.* (anon.). **Sml. P.* 84*b* (पुलिन्दस्य). **Sml. B.* 102*b* (Amaru). Hemac. p. 304 (anon.). [1] *Sarasvatīk.*, Hemac. ग. [2] MS. ते: (*tiḥ*). [3] MS. दू (inserted by revisor). [4] *Skm.*, *Sbhv.*, *Sarasvatīk.*, Hemac., *Sāhityad.* °नयन; *Śp.*, *Sml. P.*, Amaru, *Daśar.* °हरण. [5] All other texts श्लेषो ऽपि सं°. [6] All other texts श्चा. [7] MS. यो. [8] *Indische Sprüche*[2], No. 1363 reads विश्रु, with some MSS. of Amaru. [9] *Skm.*, *Rasatar.* °न्त्या तया. [10] All other texts कान्तं. [11] MS. here inserts ॐ twice.

३५३

*For reff. see below.*

तद्वक्त्राभिमुखं मुखं विनिहितं[1] दृष्टिर्धृता[2] चान्यत[3]
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
हस्ताभ्यां[4] च तिरस्कृतः[5] सपुलकः स्वेदोद्गमो[6] गण्डयोः[7]
सख्यः किं करवाणि यान्ति शतधा[8] यत्कञ्चुके[9] संधयः ॥

३५४

*For reff. see below.*

दूराद्[1]उत्सुकमागते विचलितं[2] संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितं[3] भ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं[4] क्षणा[5]
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

रतिपालस्य ॥

---

३५३ **Skm.* II. 229 (अमरोः). *Sbhv.* 1581 (कस्यापि). *Śp.* 3535 (अमरुकस्य). Amaru, 11. **Sml. B.* 102*b* (Amaru). **S.-Ratnak.* v. 319 (anon.). Hemac. p. 101, Comm. (anon.). [1] Corrected from य. [2] All other texts विनमितं. [3] All other texts °ष्टिः कृता. [4] *Skm.*, *S.-Ratnak.*, Hemac., Amaru पादयोस्. [5] *Śp.*, Hemac., Amaru पाणिभ्यां. [6] *Skm.* अपि वारितः; *Sbhv.* विनिवारितः; *S.-Ratnak.* has °कृतश्च पु°. [7] MS. मौ. [8] *Skm.* सहसा. [9] MS. त corrected to य.

३५४ **Skm.* II. 249 (अमरोः). *Śp.* 3539 (कस्यापि). Amaru, 49. **Sml. P.* 84*a* (अमरुकस्य). **Sml. B.* 102*b* (Amaru). **Saml.* 137 (anon.). *Sarasvatik. ad* v. (anon.) *Kāvyapr. ad* IV. 24 (anon.). *Kāvyaprad. ad* IV. 5 ; VII. 15 (anon.). **Rasavilāsa*, § 22 (anon.). Hemac. p. 67 (anon.). **S.-Prab.* 47 (anon.). **Kāvyadarpaṇa* 34*a* (*a* only). [1] *Śp.* वेगादु° ; *Sarasvatik.* एष्यत्यु°. [2] All other texts व, excepting Hemac., *Śp.*, *Sml. P.* (which reads तरलितं) and *S.-Prab.* (विलुलितं). [3] *S.-Prab.* च. [4] *Skm.* °पानत *Saml.*, *Rasavilāsa*, Hemac., and *Kāvyaprad.* in IV. 5 किं चाञ्चित [5] *Śp.*, Amaru, *Sml. P.*, *Skm.* (B.), *Kāvyapr.*, *Sarasvatik.*, *Kāvyaprad.*, *Rasavilāsa*, Hemac., *S.-Prab.* °पूर्णेक्षणं ; *Saml.* °पूरेक्षणं.

३५५

वंचोवृत्तिर्मा भूद्बलतु च न वा वक्रमभि[तो]
न नाम स्याद्बाष्पापगमविषदं लोचनयुगम्।
समाश्वासस्तेन प्रणतशिरसः पत्युरभव
त्प्रिया प्रौढक्रोधाप्यपहृतवती यन्न चरणौ ॥

वोपालितस्य ॥

३५६

किं पादान्ते पतसि विरम[2] स्वामिनो हि स्वतन्त्राः
कंचित्कालं क्वचिदपि रतिस्तेन[3] कस्ते ऽपराधः।
आगस्कारिण्यहमिह यया जीवितं त्वद्वियोगे
भर्तृप्राणाः स्त्रिय इति[5] ननु त्वं मयैवानुनेयः ॥

वाक्कूटस्य ॥

*Skm. ii. 231 (भावदेव्याः). *Padyāv. 377 (कस्यचित्).

३५७

यन्नम्यं गुरुगौरवस्य सुहृदो यस्मिल्ँ[1] लभन्ते ऽन्तरं
यद्दाक्षिण्यरसाद्प्रियया[2] च स(fol. 55b)हसा[3] नर्मोपचारा-
ण्यपि[4]।
यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय
स्तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपेन[5] किम् ॥

Sbhv. 1626 (कस्यापि). Śp. 3561 (,,). *Sml. B. 108b (Amaru).

---

३५५ [1] Corrected from न ? [2] MS. र्त्ति. [3] MS. स्वा. [4] MS. प.

३५६ [1] MS. य. [2] *Padyāv.* लुठसि विमनाः. [3] *Skm.* and *Padyāv.* त: the latter proceeds °स्तत्र. [4] MS. री. [5] MS. ते (*ti*).

३५७ [1] MS. न्. [2] *Sbhv.* °न्नयाच्च. [3] *Śp.* सहते. [4] *Sbhv.* °रावदि; *Śp.* °रानपि. [5] *Sbhv.* कोपो ऽस्ति; MS. °चेन.

३५८

*For reff. see below.*

भ्रूभङ्गो[1] गुणितश्चिरं[2] नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौने ऽभियोगः कृतः ।
धैर्यं[3] कर्तुमपि स्थिरीकृतमिदं चेतः[4] कथंचिन्मया
बद्धो मानपरिग्रहः परिकरे[5] सिद्धिस्तु दैवे स्थिता ॥

धर्मकीर्त्तेः ॥

३५९

*For reff. see below.*

तथाभूदस्माकं प्रथममविभिन्ना[1] तनुरियं
ततो ऽनु त्वं प्रेयानहमपि[2] हताशा प्रियतमा ।
इदानीं नाथस्त्वं[3] वयमपि कलत्रं किमपरं
मयाप्तं[4] प्राणानां कुलिशकठिनानां फलमिदम् ॥

भावकदेव्याः ॥

---

३५८ *Skm.* II. 228 (धर्मकीर्त्तेः and also (A.) अमरोः). *Sbhv.* 1578 (अमरुकस्य). *Padyāv.* 230 (अमरोः). **Sml. P.* 84b (अमरुकस्य). **Sml. B.* 102b (अमरुकस्य). Nami *ad* Rudraṭa VI. 46 (anon.). **S.-Mukt.* I. 93 (anon.). Amaru, 97. [1] *Skm.*, *Sbhv.*, *Sml. P.*, *Sml. B.*, Amaru, Nami, *S.-Mukt.* °भेदो. [2] *Skm.* रचित. [3] MS. वै. [4] MS. त. [5] All other texts °हे परिकरः.

३५९ **Skm.* II. 232 (अमरोः). *Sbhv.* 1622 (कस्यापि). *Śp.* 3558 (अमरकस्य). **Sml. B.* 105b (Amaru). **Saml.* 145 (anon.). Amaru, 69. *Kuvalay. ad* 110 (anon.). **S.-Mukt.* I. 81 (anon.). Hemac. p. 305 (anon.). *Padyaracanā*, VIII. 14 (अमरुकस्य). [1] *Padyarac.* and Amaru (some versions) यदा; *Śp.*, *Kuvalay.*, *Saml.*, *S.-Mukt.* पुरा. [2] Amaru, *Saml.*, *Padyarac.* °भक्ता. [3] *Kuvalay.*, *S.-Mukt.* °न्वय. [4] Hemac. त्वं नाथो. [5] *Kuvalay.* हतानां.

३६०

यदा त्वं चन्द्रो ऽभूरविकलकलापेशलवपु[1]
स्तदाहं जातार्द्रा[2] शशधरमणीनां प्रतिकृतिः[3]।
इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः
किरन्ती कोपाग्नीनहमपि रविग्रावघटिता ॥

अचलसिंहस्य ॥

*For reff. see below.*

३६१

कोपो[1] यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः[2] प्रसादः।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि[3] न हि[4] मे मन्युमोक्षः खलायाः ॥

प्रद्युम्नस्य ॥

*For reff. see below.*

३६२

शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सह[सा]
समाश्लिष्यन्नेव प्रशिथिलभु[ज]ग्रन्थिरभवः।

*For reff. see below.*

---

३६० **Skm.* II. 235 (अचलस्य). *Śp.* 3564 (अचलस्य). **Sml. P.* 88*b* (अचलस्य). **Sml. B.* 107*a* (अचलस्य). **Sabhyāl.* II. 38 (भावमिश्रस्य). [1] *Śp.* °भूः शिशिरकरसंपर्करुचिर; *Sabhyāl.* °भूः °°°र्कमधुर; *Sml. P.* °भूर्हिमकरकलाप(*sic*)सलवपु. [2] *Skm.* तदार्द्रा जाताहं. [3] MS. ग; *Śp.* कृ; so also *Sabhyāl.* (कृश). [4] *Skm.* प्रकृतिभिः.

३६१ **Skm.* II. 234 (अमरोः). *Sbhv.* 1630 (कस्यापि). *Śp.* 3562 (वामनस्य). **Sml. B.* 106*a* (वामनस्य). Amaru, 38. *Daśar. ad* II. 18 (अमरुशतके). *Sarasvatīk. ad* v. 138 (anon.). [1] MS. correction (from सौ ?). [2] MS. त; *Skm.* यत्र दृष्टिः. [3] *Sbhv.* पतसि. [4] All other texts च.

३६२ **Padyāv.* 261 (समाहर्तुः). *Daśar. ad* II. 6 (anon.). *Sāhityad.* p. 34 (anon.). Amaru, 109. **Sabhyāl.* IV. 8 (अमरस्य). [1] All other texts यदा: MS. सहसमा with ा deleted before म. [2] MS. न्नै.

तदेतान्काचक्षे[1] घृतमधुमय त्वन्मृदु[2] वचो
विषेणाघूर्णन्ती किमपि न सखीयं[3] गणयति ॥

हिङ्गोकस्य ॥

३६३

मुग्धासि नायमपराध्यं[1]ति सै[2]वमालि
केयं रुषा पं[3]रुषिता लिखिताप्यनेन ।
केलिस्खलद्वसनमु(fol. 56a)त्पुलकाङ्गभङ्ग
मुत्तुङ्गपीनकुचमालिखिता त्वमेव ॥

वीर्यमित्रस्य ॥

३६४

*Skm. II. 420 (पाणिनेः).

पाणौ शोणतले[1] तनूदरि दरक्षा[2]र[3] कपोलस्थलं[4]
विन्य[5]स्यां[6]ञ्जनदिग्धलो[च]नजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दली
मुन्मीलन्नवमालतीपरिमलः किं तेन विस्मर्यते ॥

३६५

कोपः सखि प्रियतमे ननु वञ्चनैव
तन्मुञ्च मानिनि रुषं क्रियतां प्रसादः ।
प्राणेश्वरश्चरणयोः पतितस्तवायं
संभाष्यतां विकसता नयनोत्पलेन ॥

---

३६२ [1] *Padyāv.* °तद्व्याचक्षे or क्ष्ये; *Daśar.*, Amaru, *Sabhyāl.* (?) क्काचक्षे; MS. °तङ्का (?) for °तान्का. [2] All other texts °त्वद्रुज. [3] All other texts मे.

३६३ [1] MS. ध्यं. [2] *Sic* MS. (for मे?). [3] MS. य. [4] MS. तु.

३६४ [1] *Skm.* also (A.) मे. [2] *Skm.* also (B.) च. [3] MS. र; *Skm.* मा. [4] *Skm.* ली. [5] MS. न्या, with mark of error against the vowel. [6] *Skm.* स्ता.

३६५ [1] MS. *sic* (see Exegetical Notes).

३६६

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदो ऽस्मासु न मे ऽपराध्यति[1] भवान् सर्वे ऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा[2] कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि[3] दयिता नास्मीत्यतो रुद्यते ॥

कुमारभट्टस्य ॥

*For reff. see below.*

३६७

गतप्राया रात्रिः कृशतनु[1] शशी शीर्यत[2] इव
प्रदीपो[3] ऽयं निद्रावशमुपगतो घूर्णत[4] इव।
प्रणामान्तो[5] मानस्त्यजसि[6] न तथापि[7] क्रुधमहो
कुचप्रत्यासत्त्या[8] हृदयमपि ते चण्डि[9] कठिनम् ॥

महोदधेः ॥

*For reff. see below.*

---

३६६ **Skm.* II. 216 (अमरोः). *Sbhv.* 1614 (भट्टकुमारस्य). *Śp.* 3554 (कुमारदासस्य). **Sml. P.* 86*b* (कुमारदासस्य). **Sml. B.* 105*a* (कुमारदासस्य). Amaru, 57. *Sāhityad.* p. 43 (anon.). *Daśar. ad* II. 16 (Amaru). *Sarasvatīk. ad* I. 117; II. 144 (anon.). **S.-Ślokāḥ.* 13*b* (anon.). **Sabhyāl.* 30*a* (कुमारदासस्य). **S.-Mukt.* I. 53 (anon.). Ananta *ad Rasam.* p. 42 (anon.). Hemac. p. 149 (anon.). [1] *S.-Mukt.* दो. [2] *Sarasvatīk.* I. 117 सि. [3] *Sabhyāl.* मन. [4] Hemac. त्वे. [5] *S.-Ślokāḥ.* भवानि.

३६७ *Sbhv.* 1612 (बाणभट्टस्य). *Śp.* 3713 (कस्यापि). Bühler, *Ind. Antiquary*, I. p. 114 (Bāṇa). *At.* p. 54 (anon.). **Sml. P.* 120*a* (anon.). **Sabhyāl.* IV. (21*a* कस्यापि). *Padyaracanā.* IX. 1 (कस्यापि). **Padyaveṇī.* V. 34 (anon.). [1] *Śp., Sabhyāl., Padyarac., Padyaveṇī.* शशिमुखि. [2] *Sbhv.* सीदत; Bühler शशीयत (*sic*). [3] MS. यो. [4] *At., Sabhyāl.* र्णि. [5] Bühler न्ते; *At.* °न्तः कोप°. [6] Bühler °नं त्य. [7] Bühler यथा त्वं; *Śp., Sabhyāl.* °नस्तदपि न जहासि; *Padyaveṇī* °दपि वहसि त्वं. [8] MS. °ग्रत्या. [9] Bühler सुभ्रु.

३६८

गतो दूरं चन्द्रो जठरलवलीपाण्डरवपु
र्दिशः किंचित्किंचित्तरणिकिरणैर्लोहितरुचः।
इदं निद्राच्छेदे रसति सरसं सारसकुलं
चकोराक्षि क्षिप्रं जहिहि जहिहि प्रेमलडितम् ॥

३६९

*Skm. II. 197 (विम्वोकस्य). *Sml. P. 123a (कस्यापि).

मया तावद्गोत्रस्खलितहतकोपान्तरितया
न रुद्धो निर्गच्छन्नयमतिविलक्षः प्रियतमः।
अयं त्वाकूतज्ञः परिणतिपरामर्श[1]कुशलः
सखीलोको ऽप्यासील्लिखित इव चित्रेण किमिदम् ॥

हिम्बोकस्य ॥

३७०

Amaru 30. *Sml. B. 105b. *Padyāv. 222 (अमरोः). Jayaratha ad As. p. 5 (anon.).

भवतु विदितं कृत्या[1]लापैरलं प्रिय गम्यतां
तनु(fol. 56b)रपि न ते दोषो ऽस्माकं विधिस्तु पराङ्मुखः।
तव यदि तथारू[2]ढं प्रेम प्रपन्नमिमां दशां
प्रकृतिचपले[3] का नः पीडा गते हतजीविते ॥

धर्मकीर्त्तेः ॥

३७१

*For reff. see below.*

असद्वृत्तो नायं न च सखि[1] गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः।

---

३६९ [1] MS. र्षं.

३७० [1] *Padyāv.* भव्या; Jayar. व्यर्था. [2] *Padyāv.* °भूतं. [3] Jayar. °तरले.

३७१ **Skm.* II. 237 (कस्यचित्). *Sbhv.* 1607 (अमरुकस्य). *Śp.* 3552 (कस्यापि). **Sml. P.* 86a (anon.). **Saml.* 143 (anon.). [1] *Sbhv.*, *Śp.*, *Sml.* खलु; *Saml.* भवति न गुणैर्वा विरहितः.

गृहाणैनं मुग्धे व्रजतु तव[1] कण्ठप्रणयिता
मुपायो नास्त्यन्यो हृदयपरितापोपश[म]ने ॥

३७२

अनालोच्य[1] प्रेम्णः परिणतिमनादृत्य सुहृद
स्त्वयाकाण्डे[2] मानः किमिति शरले[3] प्रेयसि[4] कृतः ।
समाकृष्टा ह्येते विरहदहनोद्भासुर[5]शिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्य[6]रुदितैः[7] ॥

*For reff. see below.*

विकटनितम्बायाः ॥

३७३

मा रोदीः सखि नश्यदन्धतमसं पश्याम्बरं ज्योत्स्नया
शीतांशुः सुधया विलिम्पति सखाराज्ञो[8] मनोजन्मनः ।
कः कोपावसरः प्रसीद रहसि स्वेदाम्भसां बिन्दवो
लुम्पन्तु[1] स्तनपत्त्र[2]भङ्गमकरीः सौधागुरु[3]श्यामलाः ॥

३७४

मा रोदीः करपल्लवप्रणयिनीं कृत्वा कपोलस्थलीं
मा भाङ्क्षीः परिखेदसाक्षिभिरिव श्वासैर्मुखेन्दोः श्रियम् ।

३७१ [1] *Sbhv.* निज. [2] *Sml.* तव हृदय° ; *Saml.* तव हृदयदाहो°.

३७२ **Skm.* II. 206 (राजशेखरस्य). *Sbhv.* 1170 (कस्यापि). **Sml. B.* 104*b* (वाग्भटस्य). Amaru, 80. **Padyāv.* 228 (अमरोः). **Saml.* 141 (anon.). **S.-Mukt.* I. 99 (anon.). [1] *Saml.* क्व. [2] MS. याः (for या ऽ?). [3] Amaru also मुग्धे; so *S.-Mukt.* [4] *Sbhv.*, *Saml.*, Amaru संप्रति. [5] *Sbhv.* धृ; *S.-Mukt.* सरलत्वे नविडि (*sic*). [6] *Sbhv.*, *Saml.*, Amaru प्रलय. [7] *S.-Mukt.* °सित. [8] *Sbhv.* °ना तस्य रु° ; the MS. has ण for ख.

३७३ [1] MS. प. [2] MS. तु or त्त. [3] MS. र.

मुग्धे दग्धगिरः स्खलन्ति शतशः किं कुप्यसि प्रेयसि
प्राणास्तन्वि ममासि नोचितमिदं तद्यर्थमुत्ताम्यसि ॥

३७५

Śp. 1171 (कस्यापि).

यदेतन्नेत्राम्भः पतदपि[1] समासाद्य तरुणी
कपोलैर्[2]व्यासङ्गं कुचकलशमस्याः कलयति ।
ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं
स्वभावस्वच्छानां विपदपि मुखं[3] नान्तरयति ॥

३७६

*Skm. II. 139. पक्ष्मान्तस्खलिताः कपोलफलके लोलं लुठन्तः क्षणं
धारालास्तरलोत्सलत्तनुकणाः पीनस्तनास्फालनात् ।
कस्माद्ब्रूहि तवाद्य कण्ठ(fol. 57a)विगलन्मुक्तावलीविभ्रमं
बिभ्राणा निपतन्ति बाष्पपयसां प्रस्यन्दिनो बिन्दवः ॥

राजशेखरस्य ॥

३७७

For reff. see below.

कपोले पत्त्राली करतलनिरोधेन मृदिता[1]
निपीतो निःश्वासैर्[2]यममृतहृद्यो ऽधररसः ।

---

३७५ [1] MS. ये (yi). [2] Śp. ले. [3] MS. corrected from खा.
३७६ [1] Skm. च्छ. [2] MS. भ.
३७७ *Skm. II. 245 (कस्यचित्). Sbhv. 1627 (कस्यापि). Amaru, 81. Dhvanyāl. ad II. 17 (anon.). Ak. p. 261 (anon.). Sarasvatīk. ad v. 185 (anon.). *S.-Mukt. I. 90 (anon.). [1] S.-Mukt. वि(चि)हिता. [2] MS. and Skm. नि (for निः): see the lexica. [3] MS. corrected from °सौ.

मुहुः[1] कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं[3]
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥

३७८

धिग्धिक्कामयि केन दुर्मुखि कृतं किं किं न कायव्रतं
द्विचाण्यत्र दिनानि को न कुपितः को नाभवन्मा . .[2] ।
स्मः केचिन्न[3] वयं यदेकमपरस्याप्युक्तमाकर्ण्यता
मत्युन्माथिनि चन्दने ऽपि नियतं नामाग्निरुत्तिष्ठति ॥

वैद्यस्य ॥

३७९

स्फुटतु हृदयं कामः कामं[1] करोतु तनुं तनुं
न खलु[2] चटुल[प्रे]म्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानाटोपादुदीर्य वचस्तया
रमणपदवी शारङ्गाक्ष्या संशङ्कितमीक्षिता ॥

*For reff. see below.*

३७७ [1] MS. ह्न. [2] *Sarasvatîk.* लग्नः कण्ठे त° ; *Skm.* °ग्न स्ति(or स्थि)रयति. MS. writes लग्न twice, the ग्न being in the former case lost. [3] *Sarasvatîk.* टी ; *S.-Mukt.* °भरं.

३७८ [1] MS. ग्धे (*gdhi*). [2] Two syllables (नवान् ?) lost. [3] MS. म्न. [4] MS. क.

३७९ **Skm.* II. 230 (अमरोः and (B.) कस्यचित्). *Sbhv.* 1574 (अर्भकस्य). Amaru, 73. **Sml. P.* 84*a* (अमरुकस्य). **Sml. B.* 102*a* (अमरुकस्य). **S.-Mukt.* I. 84 (anon.). [1] *Sbhv.* कामं कामः. [2] *Skm.*, *S.-Mukt.*, Amaru सखि. [3] *Sbhv.*, Amaru प. [4] Amaru, *Sml. P.* °वेशा ; Amaru also °कोपाटोपा (*Śṛṅgāra-dîpikā*) and °मानोद्रेका (*Śatakāvali*). [5] MS. स्त्र. [6] MS. प. [7] Amaru also निरन्तर (so *Sml. P.*) and ससंभ्रम ; the *Śṛṅgāra-dîpikā* agrees with our MS.

३८०

*For reff. see below.*

एकस्मिञ्शयने[1] पराङ्मुखतया वीतोत्तरं ताम्यतो
र[न्योन्यं][2] हृदये[3] स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
पश्चादाकुलयोरपाङ्गवलनान्मिश्रीभवच्चक्षुषो
र्भग्नो मानकलिः[4] सहासरभसंव्यावृत्त[6]कण्ठग्रहः[7] ॥

३८१

कन्दर्पकन्दलि सली . .[1]शा लुनीहि
कोपाङ्कुरं चरण . . . . [2]तिथिः स्याम।
पश्य प्रसीद चरमाचलचूलचुम्बि
बिम्बं विधो[3]र्लवलपाण्डुरमस्तमेति ॥

३८२

अहो दिव्यं चक्षुर्वहसि तव सापि[1] . . . .
. . . (fol. 57b)मग्नाङ्कं युवतिषु वपुः संक्र[2] . . . ।

---

३८० **Skm.* II. 248 (अमरोः). *Sbhv.* 2112 (anon.). *Śp.* 3715 (अमरुकस्य). **Sml. B.* 150*a* (Amaru). *Sāhityad.* p. 81 (anon.). Jayaratha *ad As.* p. 14 (anon.). **S.-Mukt.* I. 39 (anon.). Hemac. p. 70 (anon.). **S.-Prab.* 61 (anon.). [1] MS. °तस्मिन् श°. [2] *Sbhv.*, *Śp.*, Amaru, Hemac., Jayar., *S.-Prab.* य ; *Skm.*, *Sāhityad.* °रन्योन्यस्य हृदि. [3] The other texts have दम्पत्योः शनकैर°, *S.-Mukt.* continuing पांगवलिताम्मि°. [4] MS. ष्ठि : see Introduction. [5] Amaru, *Śp.*, *S.-Prab.* सं. [6] *Skm.*, *Sāhityad.* °सक्त. [7] *Skm.* also (B.), Hemac. हं ; *Sbhv.* कौतूहलः ; *Śp.* कण्ठग्रहो ऽनुष्ठितः.

३८१ [1] Akṣaras lost (लद्द and योर्न सदा ? °वृथा ?). [2] MS. र्थि. [3] MS. here inserts ꣸ twice (near the hole for the string).

३८२ [1] Two doubtful akṣaras; the next seven are lost: see Exegetical Notes. [2] The next five akṣaras are lost: see Notes.

. . नाभिज्ञानं कथमितरथा पश्यति पुरो
भवानेकस्तस्याः प्रतिकृतिमयीरेव[1] रमणीः ॥
मनोविनोदकस्य ॥

३८३

प्रिये मौनं [मुञ्च श्रुतिरमृतधारां पि]बतु मे
दृशावुन्मील्येतां भवतु जगदि[न्दीव]रमयम्[1]।
प्रसीद प्रेमापि प्रशमयतु निःशेषमधृती
रभूमिः[2] कोपानां ननु निरपराधः परिजनः ॥
हिम्वोकस्य ॥

*Skm. II. 243 (हिम्वोकस्य).

३८४

कोपस्त्व[या य]दि कृतो मयि[2] पङ्कजाक्षि
सो ऽस्तु प्रियस्तव किमस्ति[3] विधेयमन्यत्।
आश्लेषमर्पय मदर्पितपूर्व[मुच्चै[4]]
रुच्चैः समर्पय मदर्पितचुम्बनं च ॥
शतानन्दस्य ॥

Amaru, 133. Śṛṅgāratilaka, 23. *S.-Ratnak. v.324 (anon.).

३८५

सखि कलितः स्खलितो . . सौ[1] नैव प्रणाममाचेण।
चिरमनुभवतु भवत्या बाहुलताबन्धनं धूर्तः ॥
गोनन्दस्य ॥

---

३८२ [1] MS. here inserts पङ्ग पङ्ग (?) (near the hole for the string).

३८३ [1] These four akṣaras are partly legible in the MS. [2] These two akṣaras are partly legible in the MS. [3] MS. नैः (naiḥ). [4] MS. मैः.

३८४ [1] Amaru, *Śṛṅgārat.* हृ. [2] Amaru, *Śṛṅgārat.* यदि; *S.-Ratnak.* यदि कृतो हृदि. [3] Amaru, *Śṛṅgārat.* च. [4] Two akṣaras lost in MS. owing to homœoteleuton. [5] MS. र्पै.

३८५ [1] *Sic* MS., with two akṣaras lost or, if the space is insufficient, omitted. Should we read °तो ऽसौ शाखो ? Cf. 394*b*.

३८६

जाते केलिकलौ कृते कमितरि व्यर्थानुनीतौ चिरा
न्माने म्लायति मन्मथे विकसति[1] क्षीणे . धौ[2] ऽनेहसि ।
मायास्वापमुपेत्य तन्निपुणया निद्रान्ध्यमाचेष्टितं
मानम्लानिरभून्न येन च न चाप्यासीद्रहःखण्डनम् ॥

३८७

कथंचिन्नैदाघे दिवस इव कोपे विगलिते
प्रसत्तौ[1] . . यां तदनु च निशायामिव शनैः ।
स्मितज्योत्स्नारम्भक्षपितविरहध्वान्तनिवहो
मुखेन्दुर्मानिन्याः स्फुरति कृतपुण्यस्य सुरते[2] ॥

३८८

Sbhv. 1160 (अमरुक-स्य?). Śp. 3542 (कस्यापि).

मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं[1]
[नो ग] (fol. 58a) न्तुं न सखीजनो ऽस्ति चतुरो यो मां
बलान्नेष्यति ।
मानी सो ऽपि जनो न लाघवभयादभ्येति मात[2]: स्वयं
कालो याति चलं च जीवितमिति क्षुण्णं[3] मनश्चिन्तया[4] ॥

३८९

Sbhv. 1163 (बुद्धकस्य). *Sml. B. 103b (वधुकस्य).

यावन्नो सखि गोचरं नयनयोरायाति ता[व]द्द्रुतं
गत्वा ब्रुहि यथाद्य[1] ते दयितया मानः समालम्बितः ।

---

३८६ [1] MS. ते (ti). [2] वो? क्रुधौ to be read? [3] MS. त्प.

३८७ [1] *Sic*? or त्तौ? The next two akṣaras are lost: read जातायां or प्राप्तायां? [2] MS. भे.

३८८ [1] Akṣara partly lost. [2] MS. ॰टार. [3] MS. च:. [4] MS. ॰तपा.

३८९ [1] MS. द्यु.

दृष्टे धूर्तविचेष्टिते तु दयिते तस्मिन्नवश्यं[1] मम
स्वेदाम्भःप्रतिरोधिनिर्भरतरं[2] स्मेरं मुखं जायते ॥

३९०

दुष्टा मुष्टिभिराहता हृदि नखैराचोटिता[1] पार्श्वयो
राकृष्टा कवरीषु गाढमधरे सीत्कुर्वती खण्डिता ।
त्वत्कृत्यं त्वदगोचरे ऽपि हि कृतं सर्वं मयैवाधुना
मामाज्ञापय किं करोमि शठले[2] भूयः सपत्न्यास्तव ॥

३९१

सुतनु जहिहि मौनं[1] पश्य पादानतं मां
न खलु तव[2] कदाचित्कोप एवंविधो ऽभूत् ।
इति[3] निगदति[4] नाथे तिर्यगामीलिताक्षी
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥

For reff. see below.

३९२

चेतस्यङ्कुरितं विकारिणि दृशोर्द्वन्द्वे[1] द्विपत्त्रायितं
प्रायः पल्लवितं वचःस्वपरताप्रत्यायमानादिष[2] ।

---

३८९ [1] MS. श्य. [2] *Sbhv.* °नोः.

३९० [1] *Sic* MS. (for च्छो?). [2] MS. स.

३९१ **Skm.* II. 250 (अमरोः). *Sbhv.* 1600 (कस्यापि). *Śp.* 3577 (कस्यापि). **Sml. P.* 89*a.* (अमरूकस्य). **Sml. B.* 108*b* (Amaru). **Saml.* 151 (anon.). Amaru, 39. *Sāhityad.* p. 98 (anon.). **S.-Ratnak.* (only *a*) v. 12 (anon.). With *b* cf. Bharata's *Nāṭyaśāstra* XV. 67*a*. [1] *Skm.*, *Sāhityad.*, *Sml. B.* कोपं; *S.-Ratnak.* जहिहि तरुणि कोपं; *Sbhv.*, *Śp.*, *Sml. P.* मानं. [2] *Śp.* तव न खलु. [3] MS. ते (*ti*). [4] *Sml. P.* °दित.

३९२ [1] MS. द्व. [2] *Skm.* वचस्युपचितं प्रौढं कपोलस्थले.

तत्तत्कोपविचेष्टिते कुसुमितं पादानते तु प्रिये
मानिन्याः [फलितं] ने[1] मानतरुणा पर्यन्तवन्ध्यायितम् ॥

राजशेखरस्य ॥

३९३

*Skm. II. 236 (मनोकस्य).

कियन्मात्रं गोत्रस्खलितमपराधध्वं[1]रणयो
श्चिरं[2] लोठत्येष प्रहवति[3] न मानाद्विरमसि ।
एषं [मुञ्चामुञ्च प्रियमनुगृहाण][4]यतिहितं
शृणु त्वं यद्ब्रूमः प्रियसखि नखं मा कुरु नदीं[5] ॥

३९४

दैवादयं यदि जनो विदितो ऽपराधी
दासोचितैः परिभवैरयमेव शास्यः ।
एषा[1] कपोलफलके ऽ . . . . . .
. . . . . . . (fol. 58b) बाष्पजलप्रं[2]णालैः[3] ॥

३९५

कृत्वागः स च नागतो ऽपि किमपि व्यक्तं मनो मन्यते
तत्कासे कमुपैमि जङ्गमवने को मामिहाश्वासयेत् ।
इत्युक्त्वाश्रु[1]गलन्मुखी विटसखी ध्वस्ता विस . . .
. . . . . . . . .[2] रसि कृतात्यन्तं प्रिया रोदिता[3] ॥

वल्लणस्य ॥

---

३९२ [1] *Skm.* नु. [2] MS. पि.

३९३ [1] *Skm.* °ध्वं च. [2] *Skm.* लोचत्ये (A.) and नोठत्ये (B.). [3] *Skm.* प्रहरति. [4] The MS. retains traces of these four akṣaras. [5] *Skm.* न माने कुरु मतिं; correct MS. to मुखं मा . . . ? Cf. 394 *c-d*.

३९४ [1] This akṣara is partly defaced in the MS. [2] MS. पु. [3] Regarding the sense of the lost akṣaras see Exegetical Notes.

३९५ [1] MS. स्रु. [2] The missing syllables may have been something like विसं]वादिता । शोकोन्मत्तसखीगणो[रसि. [3] *Sic* MS. (for °ति or even ऽरादत (see Lexx.) ?).

३९६

कपोलं[1] पक्ष्मभ्यः कलयति कपोलात्कुचतटं
कुचान्मध्यं मध्यान्नवमुदितनाभीसरसिजम्[2]।
न जानीमः [किं नु क्व[3] सुकृतमनेन व्यवसि]तं
यदस्याः प्रत्यङ्गं नयनजलबिन्दुर्विहरति[4] ॥

*Skm. II. 140 (नरसिंहस्य).

३९७

विकिर नयने मन्दच्छायं भवत्वसितोत्पलं
वितर दयिते हासज्योत्स्नां निमीलतु पङ्कजम्।
वद सुवदने लज्जामूका भवन्तु शिख[ण्डिन]ः[1]
परपरिभवो मानस्थानेन मानिनि सह्यते ॥

३९८

अयं धूर्तो[1] मायाविनयमधुरोऽस्य चरिता[2]
न्सखि[3] प्रत्येषि[4] त्वं प्रकृतिसरले पश्यसि न किम्।
कपोले यल्लाक्षा[5]रसबहलभोगप्रणयिणी[6]
मिमां धत्ते मुद्रामनतिचिरवृत्तान्त[7]पिशुनाम् ॥

*Skm. II. 117 (सोह्नोकस्य).

३९९

अप्राप्तकेलिसुखयोरतिमानरुद्ध
संधानयो रहसि[1] जातरुषोरकस्मात्।

---

३९६ [1] *Skm.* करप्रान्तात्स्तन (A.) and कपोलात्स्तन (B.). [2] *Skm.* स्तनान्नाभिं नाभेर्घनजघनमेत्य प्रतिमुहुः. [3] The MS. retains traces of these three akṣaras; *Skm.* क्व सुकृतमनेन (A.) and क्व नु दनेन (B.). [4] MS. र्षि.

३९७ [1] So to be read? or शिखावलाः?

३९८ [1] *Skm.* वा (?). [2] *Skm.* वचसः. [3] MS. खि (*khi*). [4] MS. त्ये. [5] MS. च्या. [6] *Skm.* रा. [7] MS. त.

३९९ [1] MS. से (*si*).

यूनो[1]र्मिथो ऽभिलष[2]तोः प्रथमानुनीतिं
भावाः प्रसादपिशुनाः क्षपयन्ति निद्राम् ॥

सोन्नोकस्थितेः ॥

४००

*Skm. II. 208 (कस्यचित्).

श्रवसि न कृतास्ते तावन्तः[1] सखीवचनक्रमा
शरणपतितो ऽङ्गुष्ठाग्रेणाप्ययं न हतो[2] जनः ।
कठिन[3]हृदये मिथ्यामौ[4]नव्रतव्यसना[5]दयं
परिजनपरित्यागोपायो न[6] मानपरिग्रहः ॥

४०१

*Skm. II. 221.

न मन्दो वक्त्रेन्दुः श्रयति न ललाटं कुटिलता[1]
न नेत्राब्जं रज्य[2]त्य[3]नुष[4]जति न[5] भ्रूरपि भिदाम् ।
इदं तु प्रेयस्या(fol. 59a): प्रथयति रुषो ऽन्तर्विकसिताः[6]
शते ऽपि प्रश्नानां यदभि[7]दुरमुद्रो ऽधरपुटः ॥

वैद्यधन्यस्य ॥

४०२

Śp. 3536 (कस्यापि).

तत्तद्वदत्यपि यथावसरं[1] हसत्य
प्यालिङ्गने ऽपि न निषेधति चुम्बने ऽपि ।
किन्तु प्रसादनभयादति[2]निह्नुतेन
को[3]पेन को ऽपि निहितो ऽद्य रसावतारः ॥

महाव्रतस्य ॥

---

३९९ [1] MS. पूरो. [2] MS. षि.

४०० [1] MS. न्त:. [2] MS. भो : read निह्नतो? [3] MS. repeats the न. [4] Skm. सौ. [5] MS. वा. [6] Skm. च.

४०१ [1] Skm. equally well तां. [2] Skm. also (A.) च. [3] Skm. also (B.) त. [4] Skm. also (A.) स. [5] MS. °नित. [6] Skm. °लसितं. [7] MS. भे (bhi).

४०२ [1] MS. र. [2] Śp. पि. [3] Corrected from कौ. [4] Śp. वि.

४०३

आश्लेषेण पयोधरप्रणयिनी प्रत्यादिशन्त्या दृशं
दृष्ट्वाचाधरबद्धतृष्णमधरं निर्भर्त्सयन्त्या मुखम्।
ऊर्वोर्गाढनिपीडनेन जघने पाणिं च रुन्धानया
पत्युः प्रेम न खण्डितं निपुणया मानोऽपि नैवोज्झितः॥

४०४

दीर्घोच्छ्वासविकम्पिताकुलशिखा यत्र प्रदीपाः कुले
दृष्टिर्यत्र च दीर्घजागरगुरुः कोपे मदीये तव।
विस्रम्भैकरसप्रसादमधुरा यत्र प्रवृत्ताः कथा
स्तान्यन्यानि दिनानि मुञ्च चरणौ सैवाहमन्यो भवान्॥

४०५

परीरम्भारम्भः स्पृशति परमिच्छां न तु भुजौ
भजन्ते विज्ञानं न तु गिरमनूरोधविधयः।
मनस्विन्याः स्वैरं प्रसरति निशासीमसमये
मनः प्रत्यावृत्तं कमितरि कथंचिन्न तु वपुः॥
चक्रपाणेः॥

४०६

अद्योद्यानगृहाङ्गणे सखि मया स्वप्नेन लाक्षारुणः
प्रोत्क्षिप्तोऽयमशोकदोहदविधौ पादः क्वणन्नूपुरः।
तावत्किं कथयामि केलिपटुना निर्गत्य कुञ्जोदरा
दज्ञातोपनतेन तेन सहसा मूर्ध्नैव संभावितः॥
मधुकूटस्य॥

---

४०३ [1] MS. ष्णु. [2] MS. ना. [3] MS. न.
४०४ [1] MS. च्छा.
४०५ [1] MS. मे (*mi*). [2] MS. मः.
४०६ [1] Cf. the verse अद्योद्याने in the *Karpasundari* I. 36, plainly based upon this.

४०७

*Skm. II. 201 (अमरोः). Sbhr. 1118 (कस्यापि).

सखि स सुभगो मन्दस्नेहो मयी[1]ति न मे व्यथा
विधिपरिण[2]तं यस्मात्सर्वो जनः सुखमश्नुते ।
मम तु हृदये[3] संतापो[4]ऽयं प्रिये[5] विमुखे ऽपि यत्
कथ[6]मपि हतव्रीडं[7] चेतो[8] न याति विरागि[9]ताम् ॥

४०८

For reff. see below.

भ्रूभे(fol. 59b)दे[1] रचिते ऽपि दृष्टिरधिकं सोत्कण्ठमु[2]द्वीक्षते
रुद्धायां[3]मपि वाचि सस्मि[4]तमिदं [5]दग्धाननं जायते ।
कार्कश्यं[6] गमिते ऽपि चेतसि तनू[7] रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य[8] तस्मिञ्जने[9] ॥

४०९

Vāmana ad III. 2, 14 (anon.). Kāvyapr. ad IV. 42 (anon.). Kāvyaprad. ad IV. 20 (anon.).

प्रेया[1]न् सो ऽयमपा[2]कृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्यात्मना[3] ।
तावत्प्रत्यु[त] पा[4]णिसंपुटलसन्नी[वी]निबन्धं[5] धृतो
धावित्वेव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥

---

४०७ [1] Sbhv. मे. [2] Skm., Sbhv. विरचि. [3] Skm. मनसः; Sbhv. सततं. [4] MS. यो. [5] Skm., Sbhv. जने. [6] Skm. च्चण. [7] MS. ड. [8] MS. तौ. [9] Sbhv. ग.

४०८ *Skm. II. 227 (अमरोः). Sbhv. 1580 (भदन्तारोग्यस्य). *Sml. P. 85a (भदन्तारोग्यस्य). *Sml. B. 103a (भदन्तारोग्यस्य). Śp. 3540 (भदन्तवर्मणः). Amaru, 28. *S.-Mukt. I. 44 (anon.). *S.-Ratnak. V. 318 (anon.). Sāhityad. p. 81 (anon.). [1] Śp., Amaru, Sml., S.-Ratnak., S.-Mukt. ०भङ्गे. [2] Skm. also (A.) च्च. [3] S.-Ratnak. सद्धार्या. [4] MS. स्मि. [5] S.-Mukt., S.-Ratnak. मु. [6] MS. स्य. [7] MS. न. [8] Amaru also नामास्य. [9] S.-Ratnak. चणे; MS. ०न् ज०.

४०९ [1] MS. प्रिप्रा. [2] MS. षा. [3] Kāvyapr., Kāvyaprad., Vāmana ०त्युन्मना. [4] MS. ०त्पा. [5] MS. न्ध.

४१०

गते प्रेमाबन्धे हृदय[1]बहुमाने वि[2]गलिते
निवृत्ते सद्भावे जन इव जने[3] गच्छति पुरः ।
तदुत्प्रे[क्ष्योत्प्रे]क्ष्यं[4] प्रियसखि गतांस्तांश्च दिवसा
न[5] जाने को हेतुः स्फुट[6]ति शतधा यन्न[7] हृदयम् ॥

For reff. see below.

४११

सुतनु नितम्बस्तव पृथुरक्ष्णोरपि नियतमर्जुनो महिमा ।
मध्यः सबलिरिदानीं मान्धाता कुचतटः क्रियताम् ॥

४१२ दामोदरस्य ॥

दृष्टे लोचनवन्मना[1]ङ्मुकुलितं चाये गते[2] [3]वक्त्रव
न्न्यग्भूतं बहिरास्थितं पुलकवत्संस्पर्श[4]मातन्वति ।
नीवीबन्धवदागतं शिथिलता[5]माभाष[मा]णे तं[6]तो
मानेनाप[7]सृ[8]तं ह्रियेव सुदृशः पाद[9]स्पृशि प्रेयसि ॥

For reff. see below.

---

४१० *Skm. II. 893 (अमरोः). Sbhv. 1141 (विज्जकायाः). Śp. 3545 (अमरुकस्य). Amaru, 43. S.-Muktāv. XIV. 7 (anon.). S.-Mukt. x. 14 (anon.). [1] Skm., Śp., Amaru, Subhāṣ., S.-Mukt. प्रणय. [2] Sbhv. पि. [3] Subhāṣ., S.-Mukt. धवे. [4] Sbhv. तथा चैवोत्प्रेक्ष्य. [5] MS °तास्ते च दिवसा. [6] Skm., Sbhv., Śp., Amaru, Subhāṣ., S.-Mukt. दल. [7] MS. यं न.

४१२ *Skm. II. 246 (कस्यचित्). Śp. 3581 (कस्यापि). Sarasvatīk. ad v. 138 and 185 (anon.). *Sml. P. 89a (कस्यापि). *Sml. B. 109a (अमरुकस्य). *Sabhyāl. 30a (Samasyā by Bhīmasena). Hemac. p. 86 (anon.). [1] Sarasvatīk. also (185) °वर्त्मनामु. [2] All other texts पार्श्वस्थिते, Hemac. with चक्रवत्. [3] Skm., Śp., Sarasvatīk., Sml. P., Sabhyāl., Hemac. सि. [4] Sarasvatīk. also (185) °तत्स्पर्शं; elsewhere स्पर्शं समा°. [5] Skm., Śp. °तां स; Sml. P. reads संवीक्ष्यमाणे. [6] MS. here inserts त्त; Śp. reads चणं; Sml. P. चणात्. [7] MS. य. [8] Sarasvatīk. ग. [9] Sarasvatīk. also (185) °तनोरङ्घ्रि.

## ॥ विरहिणीव्रज्या ॥

४१३

तापस्तत्क्षणमाहितासु बिसिनीष्वङ्गारकारायते
बाष्पः पाण्डुकपोलयोरुपरि वैपुल्यात्क[1]र्पूरायते ।
किं चास्या मलयद्रुमद्रवभरैर्लिम्पामि यावत्करं
तावच्छ्वाससमीरणव्यतिकरैरुड्डूलिरासीत्करः ॥

अच्युतस्य ॥

४१४

*Skm. II. 512 (विद्यायाः).

देवेन प्रथमं जितो ऽसि[1] शशभृल्लेखाभृतानन्तरं
बुद्धेनोद्धतबुद्धिना स्मर ततः कान्तेन पान्थेन मे ।
त्यक्त्वा तान्वत हंसि मामतिकृशां बा(fol. 60a)लामनाथां
स्त्रियं
धिक्त्वां धिक्[2]तव पौरुषं[3] धिगुदयं धिक्कार्मुकं धिकछ्[4]रान् ॥

श्रीराज्यपालस्य ॥

४१५

*Skm. II. 196 (अमरोः).

कर्णे यन्न कृतं सखीजनवचो यन्नादृता बन्धुवा
क्यत्पादे निपतन्नपि प्रियतमः कर्णोत्पले[2]ना[हतः ।
ते]नेन्दुर्दहनायते मलयजालेपः स्फुलिङ्गायते
रात्रिः कल्पशतायते बिसलताहारो ऽपि भा[3]रायते ॥

---

[1] MS. हे (*hi*).

४१३ [1] MS. त्तु.

४१४ [1] *Skm.* also (A.) पि. [2] MS. कु. [3] MS. ष.
[4] These three akṣaras partly lost in MS.

४१५ [1] MS. पयो. [2] MS. लो. [3] *Skm.* also (A.) हा.

४१६

आहारे विरतिः समस्त[1]विषयग्रामे निवृत्तिः परा
नासाग्रे नयनं य[2]देतदपरं यच्चैकतानं[3] मनः।
मौनं चेदमिदं च शून्यमखिलं[4] यद्विश्वमाभाति ते[5]
तं[6]ब्रूयाः सखि योगिनी किमसि भो किं वा वियोगिन्यसि॥

*For reff. see below.*

४१७

वत्से[1] नैते[2] पयो[दा[3]]: सुरपतिकरिणो नो वकाः कर्णशङ्खाः[4]
सौदामिन्यो ऽपि नैताः कनकमयमिदं भूषणं कुम्भपीठे[5]।
नैतत्तोयं नभस्तः[6] पतति मदजलं श्वासवाता[7]वधूतं
तत्किं मुग्धे वृथा[8] त्वं मलिनयसि मुखं प्रावृडित्यश्रुपातैः॥

*At.* pp. 39-40 (anon.). **S.-Hārāv.* C. 348 (anon.).

४१८

नाकानोकहसंभवैः सखि सुधाच्योतल्लवैः पल्लवैः
पल्यङ्कं क्षणमाच्चमा[1]स्तृणु [. . . .[2]]पधानीकुरु।

---

४१६ **Skm.* II. 122 (राजशेखरस्य). *Sbhv.* 3485 (anon.). *Śp.* 3423 (राजशेखरस्य). **Sml. P.* 60*b* (राजशेखरस्य). **Sml. B.* 66*a* (राजशेखरस्य). **Saml.* 89 (anon.). **Padyāv.* 237 (कस्यचित्). *Sāhityad.* p. 112 (anon.). *Sāhityak. ad* IV. 19 (anon.). *Sarasvatīk. ad* IV. 42 (anon.). **S.-Hārāv.* C. 347 (राजशेखरस्य). [1] *Sbhv.*, *Śp.*, *S.-Hārāv.* य. [2] *Sāhityad.*, *Sāhityak.*, *S.-Hārāv.* त; *Sml. P.* यद्देयद्द°. [3] *Śp.*, *S.-Hārāv.* °निष्ठं; *Sml. P.* °च्चैकिनंश्वं (?). [4] *Sāhityad.* °धुना. [5] *Sml. P.* °भाषसे. [6] *Skm.* य; *Sml. P.* ब्रूयास्त्वं. [7] MS. ग.

४१७ [1] *At.*, *S.-Hārāv.* बाले. [2] MS. नै. [3] Akṣara nearly lost. [4] MS. °स(श्र ?)खाः; *At.* °पूराः. [5] *At.* वारणानां; *S.-Hārāv.* मण्डनं कु°. [6] *S.-Hārāv.* विकीर्णं. [7] *At.* वारिधारा. [8] *S.-Hārāv.* मुधा.

४१८ [1] MS. गात्र(भ्र ?) सा(शा ?). [2] Four akṣaras omitted.

नो चेत्स्[1]नेहरसावसे[2]कविकसज्ज्वालावलीदारुणो
दारु[3]णीव न मे विरंस्यति दहन्नङ्गान्यनङ्गानलः ॥

चक्रस्य ॥

४१९

असौ गतः सौगत एव यस्मा
त्कुर्यान्निरालम्बनतां ममैव ।
सखि प्रियस्ते क्षणिकः किमन्य
न्निरात्मकः शून्यतमः स वन्द्यः ॥

श्रीभोज्य[1]देवस्य ॥

४२०

पूर्णं कपोलतलमश्रुजलैर्यदस्या
यद्धूसरं वदनपङ्कजमायताक्ष्याः ।
अर्धा[1]विदग्धगलदङ्गरसावसि[2]क्त
मा[3] (fol. 60b) द्रै[4]न्धनं तदिव भस्मकणानुयातम् ॥

४२१

अयं धारावाहस्तडिदियमियं दग्धकरका
स चायं निर्घोषः स च रववशो भेकनिचयः ।
इतीव प्रत्यङ्गप्रथितमदनाग्निं कृशतनु
र्घनश्वा[1]सोत्क्षेपैर्ज्वलयति मु[हुं[2]]र्मृत्युवशिनी[3] ॥

---

४१८ [1] MS. षे. [2] MS. रु. [3] MS. व.

४१९ [1] *Sic* MS., as in 462.

४२० [1] MS. ञा. [2] MS. चि. [3] In the MS. this akṣara has lost its vowel. [4] MS. द्रै.

४२१ [1] MS. स्वा. [2] This akṣara is partly lost. [3] MS. °सि(शि?)नी.

४२२

प्रम्लानं पीनस्तनजघनसङ्गादुभयत
स्तनोर्मध्यस्यान्तः परि[1]मिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं[2] श्लथभुजलता[3]क्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनी[4]पत्त्र[5]शयनम् ॥

*For reff. see below.*

४२३

मनो रागस्तीव्रं व्यथयति विसर्पन्न[1]विरतं
प्रमाथी निर्धूमं[2] ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित[3] इतो
न मां त्रातुं तातः[4] प्रभवति न चाम्बा न भवती ॥

*Mālatīm.* II. 1. *Kāvyapr. ad* VIII. 2 (anon.). *Kāvyaprad. ad* VIII. 2 (anon.). Hemac. p. 89 (anon.).

४२४

एतस्या विरह[1]ज्वरः करतलस्पर्शैः परीक्ष्यो न यः[2]
स्निग्धेनापि जनेन दाह[3]भयतः प्रस्थं[4]पचः पाथसाम् ।

*For reff. see below.*

---

४२२ *Ratnāvalī*, II. 38. *Śp.* 3401 (श्रीहर्षस्य). **Sml. B.* 64*b* (श्रीहर्षस्य). *Kāvyapr. ad* VIII. 11 (anon.). *Dhvanyāl. ad* I. 17 (anon.). *Kuvalay. ad* 66 (anon.). *Kāvyaprad. ad* VIII. 11 (anon.). *Aucityav. ad* 11 (श्रीहर्षस्य). **S.-Hārāv.* C. 369 (रत्नावलीतः). **S.-Mukt.* III. 88 (anon.). *Padyarac.* V. 8 (कालिदासस्य). [1] *Ratn., Kāvyapr., Kuvalay., Padyarac.* म्लि. [2] *S.-Mukt., Padyarac.* °न्यस्तं. [3] *Dhvanyāl., Kuvalay.* प्रशिथिल-भुजा. [4] *Ratn., Kuvalay.* नलि. [5] MS. य.

४२३ [1] Other texts विषमिव विसर्पत्य°. [2] *Mālatīm.* also मो; so *Kāvyaprad.* [3] MS. तः. [4] Hemac. तातस्त्रातुं.

४२४ *Bālarām.* V. 11. **Skm.* II. 163 (योगेश्वरस्य). **Sml. P.* 59*b*. **Sml. B.* 65*a*. *Aucityav. ad* 14. **S.-Hārāv.* C. 359. [1] *Skm.* एतस्यां (B. °स्याः) स्मरसं; so *Bālar.* and *Aucityav.* (with °स्याः, as in *Skm.* B.). [2] *Skm.* ऽद्य नः. [3] *Sml. P., S.-Hārāv.* स्निग्धेनापि सखीजनेन. [4] *Bālar.* शोषप्रदः.

निःशक्ती[1]कृतचन्दनौ[2]षधिविधावस्मिंश्च[3]मत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजाम्[4]॥

४२५

*Viddhaś.* II. 14. *Skm. II. 123. *Sabhyāl. III. 24.

यत्ताडीदलपाकपाण्डु वदनं यन्नेत्रयोर्दुर्दिनं[1]
गण्डः पाणिनिषेवणाच्च यदयं संक्रान्तपञ्चाङ्गुलिः[2]।
गौरी क्रुध्यतु वर्तते यदि न ते तत्कोऽपि[3] चित्ते युवा
धिग्धिक्तां सह[4]पांशुखेलनसखीलोके[5]ऽपि यन्निह्नवः ॥

राजशेखरस्यैतौ ॥

४२६

*Skm. II. 297 (राजशेखरस्य) *Sml. B. 102a ( ,, ).

केयूरीकृतकङ्कणावलिरसौ कर्णान्तिकोत्तं[1]सित
व्यालोलालकपक्ष्म[2]तिः पथि पुरो बद्धाञ्जलिः पृच्छति ।
यावत्किंचिदु[3]दन्तमात्मकमितुस्ता[4]वत्स एवेत्यथ
व्रीडाव[5]क्रितकण्ठनालमबला कैः कैर्न[6] भिन्ना रसैः ॥

४२७

*Viddhaś.* III. 23. *Skm. II. 507 (राजशेखरस्य)

प्रियवि (fol. 61*a*) रहमहोष्मामर्मरां[1]मङ्गलेखा
मपि हतकहिमांशो मा स्पृश क्रीडयापि ।

---

४२४ [1] *Skm.* निर्बीजी; *Bālar.*, *Aucityav.* निर्वीर्यी; *S.-Hārāv.* निःशेषी. [2] MS. नो. [3] *Skm.* °धौ तस्मिंश्च च (B. ट); *Bālar.*, *Sml. P.*, *Aucityav.*, *S.-Hārāv.* तस्मिंस्तड. [4] *Sml. P.*, *S.-Hārāv.* जः.

४२५ [1] *Viddhaś.*, *Sabhyāl.* यद्दुर्दिनं नेत्रयोः. [2] *Viddhaś.*, *Sabhyāl.* °र्यत्मिङ्खोलितकेलिपङ्कजदलश्वासाः प्रसर्पन्ति च. [3] MS. प. [4] *Viddhaś.* also खलु. [5] *Skm.* °वर्गे.

४२६ [1] *Skm.* कर्णावतंसीकृ. [2] MS. ज; so also *Skm.* (A.). [3] MS. द्व. [4] MS. तुः ता. [5] MS. च. [6] MS. र्न.

४२७ [1] *Skm.* °ष्ण्यान्मुर्मुरा and °ष्णान्मुर्मुरा; *Viddhaś.* °ष्मामुर्मुरा (and °र्मरा).

इह हि तव लुठन्तः प्रोषपीडां[1] भजन्ते
दरजठर[2]मृणालीकाण्डमुग्धा[3] मयूखाः ॥

४२८

यद्दौर्बल्यं वपुषि महती स[र्वतश्चास्पृ[1]]हा य
न्नासालक्ष्यं[2] यदपि नयनं मौन[मे[3]]कान्ततो यत् ।
एकाधीनं कथयति मनस्तावदेषा दशा ते
को ऽसावेकः कथ[य[3]] सुमुखि[4] ब्रह्म वा वल्लभो वा ॥

लक्ष्मीधरस्य ॥

*Skm. II. 125.

४२९

निकामं क्षाम[ाङ्गी सर[1]]सकदलीगर्भसुभगा
कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाह[2]विधुरा
मियं नः कल्याणी रमयति मतिं[3] क[म्पयति च[1] ॥]

भवभूतेः ॥

Mālatīm. II. 3. Sarasvatīk. ad IV. 62 (anon.). Ak. p. 324 (anon.).

४३०

निद्रे भद्रमवस्थितासि कुशलं संवेदने किं तव[1]
क्षेमं ते सखि निर्वृते[2] ननु समं कान्तेन यूयं गताः ।
किं चान्यत्प्रियसंगमे ऽद्य[3] चलितो गच्छन्वि[4]पद्वत्सलो
मूर्छाविस्मृत[5]वेदनापरिजनो दृष्टो ऽस्मदीयो न वा ॥

अ[6]रविन्दस्य ॥

*Skm. II. 298.

---

४२७ [1] *Skm.* प्रोषभारं. [2] *Viddhaś.* also °जरठ; see 66*d* and **note** 8 to 500. [3] *Skm.*, corrected from मुग्धकाण्डा.

४२८ [1] Four akṣaras lost. [2] *Skm.* चं. [3] Akṣara omitted. [4] *Skm.* (A.) स.

४२९ [1] Akṣaras wholly or partly lost. [2] *Mālatīm.* also म. [3] *Mālatīm., Ak., Sarasvatīk.* °नः.

४३० [1] MS. तव कि. [2] MS. त्ते. [3] *Skm.* न. [4] Akṣara वि **partly** lost in MS. [5] *Skm.* ति. [6] MS. आ.

४३१

मध्येसद्म समुद्गता तदनु च द्वारान्तरालं गता
निर्याताथ कथंचिदङ्गणमपि [प्रे]यां[1]स्तु नालोकितः ।
हंहो वायस राजहंस शुक हे हे शारिके कथ्यतां
का वार्त्तेति मृगीदृशो विजयते बाष्पान्तरायं वचः ॥

चित्राङ्गस्य ॥

४३२

*Viddhaś.* III. 17.
Hemac. comm. p. 7 (anon.).
*Kkbh. ad* v. 1.

दर[1]दलितहरिद्राग्रन्थिगौ[रे शरीरे[2]]
स्फुरति विरहजन्मा को ऽप्ययं पाण्डुभावः ।
बलवति सति यस्मिन् सार्धमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥

राजशेखरस्य ॥

४३३

प्रिये प्रयाते हृदयं प्रयातं
निं[1] (fol. 61*b*) . . . चे[2]तनया सहैव ।
निर्लज्ज हे जीवित न श्रुतं किं
महाजनो येन गतः स पन्था ॥

धर्मकीर्त्तेः ॥

---

४३१ [1] MS. या; the akṣara प्रे is lost.

४३२ [1] *Viddhaś.* also नख; so Hemac., *Kkbh.* [2] Four akṣaras lost in MS.

४३३ [1] MS. नि (*ni*). [2] In the MS. three akṣaras and the vowel of चे are lost.

४३४

बाष्पश्चक्षुषि नाञ्जनं करतले वक्त्रं न लीलाम्बुजं
गण्डे पाण्डरिमा न पत्त्र[1]मकरी श्वा[सा[2]] मुखे न स्मितम्।
इत्थं यस्य वियोगयोगविधुरं मुग्धे तवेदं वपु
र्नो जा[3]ने कतमः स पुष्पधनुषा नीतः प्रसादश्रियम् ॥

भ्रमरदेवस्य ॥

४३५

कस्मादिदं नयनमस्तमिताञ्जनश्रि
वि[1]श्रान्तपत्त्र[2]रचनौ च कुतः कपोलौ।
शृङ्गारवारिरुहकाननराजहंसि
कस्मात्कृशासि[3] विरसासि मलीमसासि ॥

विष्णुहरेः ॥

४३६

अरतिरियमुपैति मां न[1] निद्रा
गण[यति त][2]स्य गुणान्मनो न[3] दोषान्।
विगलति[4] रजनी न संगमाशा[5]
व्रजति तनुस्तनुतां न चानुरागः ॥

प्रवरसेनस्य ॥

*For reff. see below.*

---

४३४ [1] MS. यन्त्र. [2] Akṣara lost in MS. [3] MS. जां.

४३५ [1] Two akṣaras partly lost (वि doubtful). [2] MS. °यन्त्र. [3] MS. नि.

४३६ **Skm.* II. 185. *Sbhv.* 1113 (कस्यापि). *Śp.* 3427 (विल्हणस्य). **Padyāv.* 213 (कङ्कस्य). **S.-Ratnak.* V. 216 (anon.). [1] MS. नि. [2] *Skm.* also गमयति (A.); *Sbhv.* प्रथयति; MS. has lost three akṣaras. [3] *Sbhv.* मनो गुणान्न. [4] *Skm., Sbhv., Padyāv., S.-Ratnak.* विरमति. [5] MS. सा.

४३७

असावहं लोहमयी स यस्याः
क्रूरः सखि प्रस्तर . . [1] कान्तः ।
आकर्षकद्रावकचुम्बकेषु
नैको ऽप्यसौ भ्रामक इत्यवेहि ॥

शब्दार्णवस्य ॥

४३८

*Skm. II. 277. नावस्या वपुषो[1] ममेयमवधेरुक्तस्य नातिक्रमो
नोपालम्भपदानि वा[प्यकरुणे तत्रा[2]]भिधेयानि ते ।
प्रष्टव्यः शिवमालि केवलमसौ कच्चिन्नवप्रोचरे
नायातं मलयानिलैर्मुकुलितं कच्चिन्न चूतैरिति ॥

वाक्कूटस्य ॥

४३९

स्वप्ने ऽपि प्रियसंगमव्य . . . . [1] ते न निद्रागम
श्चित्रेणालिखितुं तमिच्छति यदि[2] स्वेदः सपत्नीजनः ।
मुग्धेयं कुरुते ऽथ तद्गुणकथां मन्युर्गिरामर्गलः
प्रायः पुण्यदिनानुभाववलनादाशंसितं सि . . [3] ॥

(fol. 62*a*) . . . ॥

४४०

व्योमश्रीहृदयैकमौक्तिकलते मातर्वलाकावलि
ब्रूयास्त्वं जनमादरः खलु महान् प्राणेषु कार्यस्त्वया ।

---

४३७ [1] Two akṣaras lost (एव ?).

४३८ [1] MS. यो. [2] *Skm.* also (B.) र ; six akṣaras are here lost.

४३९ [1] Four lost akṣaras (सनिन्नी श्रे ?). [2] MS. दे (*di*).
[3] गि ? The next two akṣaras are lost. Read सिध्यति ?

एतां[1] म्लानिमुपागतां स्रजमिव त्यक्त्वा तनुं दुर्वहा
मेषा[2]हं स . . . . . . . . [3]तीव्रां वियोगव्यथाम् ॥

४४१

आदृष्टिप्रसरात्प्रि[1]यस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्ते[2]षु पथिष्व[3]हःपरिणतौ ध्वान्ते समुत्सर्पति[4]।
द[5]त्त्वैकं सशुचा[6] गृहं प्रति पदं[6] पा[न्थस्त्रिय]ास्मिन् क्षणे
मा[7] भूदागत इत्यमन्दवलितोद्ग्रीवं[8] पुनर्वीक्षितम् ॥

सिद्धोकस्य ॥

For reff. see below.

४४२

श्वासास्ताण्डवितालकाः करतले सुप्ता कपोलस्थली
नेत्रे बाष्पतरङ्गिणी परि[ण[1]]तः कण्ठे कलः पञ्चमः।
अङ्गेषु प्रथमप्रवृद्धफलि[2]नी[3] लावण्यसंवा[4]दिनी
पाण्डिम्ना विरहोचितेन गमिता कान्तिः[5] कथागोचरम्[6] ॥

राजशेखरस्य ॥

*Skm. II. 126 (शचो(धो)कस्य).

---

४४० [1] MS. ता. [2] MS. षां. [3] Eight akṣaras lost in MS. The sense might be given by स भवान् सहिष्यति कथं. The remains of the first akṣara do not, however, suggest भ.

४४१ *Skm. II. 290. *Sbhv.* 1056 (अमरुकस्य). Amaru, 76. *Daśar. ad* II. 25 (अमरुशतके). **S.-Mukt.* x. 4 (anon.). **S.-Hārāv.* C. 356. [1] Amaru also °रं प्रि. [2] *Sbhv.*, *S.-Mukt.* °च्छिन्ने; Amaru has both readings. [3] MS. स्व. [4] Amaru also °न्मीलति. [5] *S.-Hārāv.* ह्र. [6] MS. °मुधा; *Skm.* यात्येव स्वनिवेशनं प्रतिपथं. The bracketed syllables have been lost. [7] MS., *S.-Mukt.* ना. [8] *Sbhv.*, Amaru, *Daśar.*, *S.-Mukt.*, *S.-Hārāv.* °तग्री.

४४२ [1] Akṣara lost. [2] MS. ले (*li*). [3] *Skm.* also °फणिनी. [4] MS. सम्पा. [5] MS. न्ति. [6] *Skm.* कथाशेषतां; MS. °गौरवं.

४४३

स्मितज्यो[त्स्ना[1]]दानादुपकुरु चकोरप्रणयिनी[2]
विधेहि भ्रूलीलां स्मरतु धनुषः पञ्चविशिखः।
अयि स्तोकोन्निद्रैर्नयनकुमुदैर्मोदय दिशो
विशेषास्ते मुग्धे दधतु कृतिनां चेतसि पदम् ॥

अपराजितरचितस्य ॥

४४४

*Skm. II. 242 (अभिनन्दस्य). Sarasvatīk. ad IV. 75 (anon.).

किमिति[1] कवरी याह[क्षाह]ग्दृशौ किमकज्जले[3]
मृगमदमसीपत्त्रन्यासः[5] स किं न कपोलयोः[6]।
अयमयम (fol. 62b) यं किं च क्षाम्यत्यसंस्मरणेन ते
शशिमुखि[8] सखीहस्तन्यस्तो विलासपरिच्छदः ॥

४४५

*Skm. II. 293 (कस्यचित).

वारं वारमलीक एव हि भवान् किं व्याहृतैर्गम्यता[4]
मित्युद्यम्य सुमन्दबाहुलतिकामुत्थापयन्त्या रुषा।
संक्रान्तैर्व[ल[2]]यैरलंकृतगलो युष्मद्वियोगोचितां
तन्वङ्ग्याः[3] प्रकटीकरोति तनुतां दृङ्क्षे भ्रमन्वायसः ॥

४४३ [1] Akṣara lost. [2] Here something has been erased. [3] MS. णी. [4] Here something has been erased. [5] MS. here inserts य.

४४४ [1] MS. here inserts ꣸ five times. [2] Skm. गद्. The bracketed akṣaras are omitted in MS. [3] Skm. किमनञ्जने; MS. लै corrected to ले. [4] MS. य (?) च. [5] MS. °स्यासः. [6] Sarasvatīk. न खलु लिखिताः पत्त्रावल्यः किमद्य°. [7] MS. शे (śi). [8] Sarasvatīk. प्रियसखि.

४४५ [1] Skm. द्य; MS. द्द. Concerning confusion between उद्यम् and उद्गम् see Böhtlingk & Roth s.v. यम् + उद् 10. [2] The damaged akṣara looks more like ले than ल. Perhaps some accidental stroke was added. [3] MS. ङ्घ्याः. [4] Skm. °ताम्.

४४६

पक्ष्माग्रग्रथिताश्रुबिन्दुविशरैर्मुक्ताफलस्पर्धिभिः[1]
कुर्वन्त्या हरहासहारि हृदये हारावलीभूषणम् ।
बाले बालमृणाल[नाल[2]]वलयालंकारकान्ते करे
विन्यस्याननमायताक्षि सुकृती[3] को ऽयं त्वया स्मर्यते[4] ॥

Śp. 3414 (कस्यापि). Daśar. ad IV. 15 (anon.). *Saml. 86 (anon.). *S.-Ratnak. V. 285 (anon.).

४४७

दहति विरहेष्वङ्गानी[र्यां[1] करोति[2]] समागमे
हरति हृदयं दृष्टः [स्पृष्टः[3]] करोत्यवशां तनुम् ।
क्षणमपि सुखं यस्मिन् प्राप्ते गते च न लभ्यते
किमपरमतश्चित्रं यन्मे तथापि स वल्लभः ॥

*Skm. II. 200 (अमरुकस्य).

४४८

को[1] ऽसौ धन्यः [कथय सुभगे] कस्य गङ्गासरय्वो[2]
स्तोयास्फालव्यतिकरखलत्कारि कङ्कालमास्ते ।
यं ध्यायन्त्याः सुमुखि लिखितं कज्जलक्लेदभाञ्जि
व्यालुम्पन्ति स्तनकलशयोः पत्त्र[म[7]]श्रू[ण्यजस्रम्] ॥

*Skm. II. 137 (कस्यचित्).

४४९

. [1] शेषेण च्छुरितकरया कुङ्कुमेनादधत्या
शोणच्छायां भवनबिसिनीहंसके कौतुकिन्या ।

४४६ [1] Śp., Daśar., Saml., S.-Ratnak. °निक. [2] Akṣaras omitted. [3] MS. ति. [4] S.-Ratnak. चिन्त्यते.

४४७ [1] Skm. also unmetrically (B.) °हे ऽगा. [2] Akṣaras lost. [3] Akṣaras omitted.

४४८ [1] MS. कौ? [2] Skm. °सरस्वत्यो°; MS. °य्यो. [3] Skm. also चम (A.). [4] MS. रे (ri) and म. [5] Skm. also स. [6] Skm. नित्य. [7] Akṣara omitted; the other bracketed akṣaras lost.

४४९ [1] One syllable (किं? प्राक्?) lost. [2] MS. च्छरति.

कोकभ्रान्तिक्षणविरहिणी यन्मयाकारि हंसी
तस्यैतन्मे . .[1] (fol. 63a) मुपनतं नाथ यत्ते वियोगः ॥

४५०

श्वासोत्कम्पतरङ्गिणि स्तनतटे धौताञ्जनश्यामलाः
कीर्यन्ते कणशः कृशाङ्गि किममी बाष्पाम्भसां बिन्दवः ।
किं चाकुञ्चितकण्ठरोधकुटिलाः श्रोत्रा[1]मृतस्यन्दिनो
हूंकाराः कलपञ्चमप्रणयिनस्त्रुट्यन्ति निर्यान्ति च ॥

Śp. 3436 (पुष्टिकस्य). *Subhāṣita-saṃcaya xxviii, 6 (anon.). *S.-Ratnak. v. 217 and 289 (anon.). *S.-Hārāv. C. 353 (पुष्टिकरस्य).

४५१

इदानीं तीव्राभिर्दहन इव भाभिः[1] परि[2]गतो
ममा[3]श्चर्यं सूर्यः किमु सखि रजन्यामुदयते[4] ।
अयं मुग्धे चन्द्रः[5] किमिति मयि तापं[6] प्रकटय[7]
त्यनाथानां बाले किमिह वि[8]परीतं न भवति ॥

४५२

मा मुञ्चाग्निमुचः करान् हिमकर[1] प्राणाः क्षणं स्थीयतां
निद्रे मुद्रय लोचने रजनि हे दीर्घातिदीर्घा भव ।
स्वप्नासा[2]दितसंगमे प्रियतमे सानन्दमालिङ्गिते
स्वच्छन्दो भवतां भविष्यति पुनः कष्टो विचेष्टारसः ॥

---

४४९ [1] Two akṣaras, no doubt फल, are here lost. Regarding the sense see Exegetical Notes.

४५० [1] MS. ता. [2] MS. य.

४५१ [1] *Subhāṣ.* ति. [2] *Śp., S.-Ratnak., S.-Hārāv.* वृ. [3] *S.-Hārāv.* हा. [4] *Śp., S.-Saṃcaya, S.-Hārāv.* ति. [5] *Subhāṣ.* सोमः. [6] MS. प. [7] *Subhāṣ.* वितनुते. [8] MS. here inserts ३.

४५२ [1] MS. र. [2] MS. हि.

४५३

दिशतु सखि सुखं ते पञ्चबाणः स साक्षा
दनयनपथवर्ती यस्त्वयालेखि नाथः ।
तरलितकर[1]शाखामञ्ज[2]रीकः शरीरे
धनुषि च मकरे च स्वस्थरेखानिवे[3]शः ॥

४५४

कस्मान्म्ला[1]यसि मालतीव मृदितेत्यालीजने पृच्छति
व्यक्तं नोदितमात्रयापि विरहे शालीनया बालया ।
अक्ष्णोर्बाष्पचयं[2] निगृह्य कथमप्यालोकितः के[वलं
किं[3]]चित्कुड्मलकोटिभिन्नशिख[4]रश्चूतद्रुमः प्राङ्गणे ॥

वाक्कूटस्य ॥

*Skm. II. 127 (वाक्कूटस्य or वाङ्कूटस्य).

४५५

उच्छूनारुणमश्रुनिर्गमवशाच्चक्षुर्गतं मन्थरं[1]
सोष्मश्वासकदर्थिताधररुचिर्व्यस्तालका भ्रू (fol. 63b) . . .[2] ।
आपाण्डुः[3] करपल्लवे च निभृतं शेते कपोलस्थली
मुग्धे कस्य तपःफलं परिणतं[4] यस्मै तवेयं दशा ॥

यशोवर्मणः ॥

---

४५३ [1] Corrected from स्र. [2] MS. ञ्च. [3] The akṣaras रे, खा, and वे are partly lost.

४५४ [1] MS. °त्म्ला. [2] *Skm.* बाष्पभरं. [3] Three akṣaras lost. [4] Corrected from खि.

४५५ [1] MS. °क्षुर्मन्मा. [2] Two akṣaras lost; neither °कुटी nor लता seems appropriate, and °स्थली recurs in *c*. [3] MS. ड्डु. [4] Corrected from तां.

४५६

केन प्राप्तो भुवनविजयः कः कृती कः कलावान्
केनाव्याजं स्मरचरणयोर्भक्तिरापादिता च ।
यं ध्यायन्ती[1] सुतनु बहलज्वालकन्दर्पवह्नि
प्रोद्यद्भस्मप्रचय[2]रचितं[3] पाण्डिमानं दधासि ॥

४५७

दग्धव्येयं नवकमलि[1]नीपल्लवोत्सङ्गशय्या
तप्ताङ्गारप्रकरविकि[2]रैः किं धुतैस्तालवृन्तैः[3] ।
त[4]चैवास्तां दहति नयने चन्द्रवच्चन्दनाम्भः
सख्यास्ते ऽयं वन इव शिखी विप्रतीयोग आ[5]धिः ॥
अभिनन्दस्य ॥

४५८

For reff. see below.

सौधादुद्विजते त्य[ज[1]]त्युपवनं द्वेष्टि प्रभामैन्दवीं[1]
द्वारान्[2]त्रस्यति चित्रकेलिसदसो वेशं[3] विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारि[4]शय्यातले
संकल्पोपनतत्वं[5]दाकृतिरसायत्तेन चित्तेन सा ॥

---

४५६ [1] MS. न्ती. [2] MS. ॰परि. [3] MS. ता.

४५७ [1] MS. ले (*li*). [2] MS. क. [3] MS. न्ती. [4] MS. ॰व्यस्तोव्यम्व. [5] Four akṣaras partly lost; the last by no means clearly आ.

४५८ *Viddhaś.* III. 2. *Bālar.* v. 8. **Skm.* II. 171. *Sarasvatīk. ad* v. 169 (anon.). **Sabhyāl.* B. 4*a* (anon.). Hemac. p. 182, Comm. (anon.). [1] MS. omits ज and reads वी at end. [2] MS. न्द्र; Hemac. ॰न्नश्यति. [3] *Viddhaś.*, *Bālar.* ष. [4] *Viddhaś.*, *Bālar.*, *Sarasvatīk.*, Hemac., *Sabhyāl.* र. [5] *Sabhyāl.* ॰मत्त.

४५९

अन्तस्तारं[1] तरलिततला: स्तोकमुत्पीडभाजः
पक्ष्माग्रेषु ग्रथितपृषतः कीर्ण[2]धाराः क्रमेण।
चित्तातङ्कं[3] निजगरिमतः सम्यगासूचयन्तो
निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः॥

*Viddhaś.* III. 24.

४६०

मुक्तानङ्गः कुसुमविशिखान् पञ्च कुण्ठी[2]कृताया
स्तन्वे मुग्धां प्रहरति हठात्पत्त्रिणा वारुणेन।
वा[3]रां पू[4]रः कथमप[5]रथा स्फारने[6]त्रप्रणाली
वक्त्रो[7]द्यान्तै[8]स्त्रिबलिविपिने शारि[9]णीसाम्यमेति॥

राजशेखरस्वामी॥

*Viddhaś.* III. 25.
**Skm.* II. 138.

४६१

उन्मील्याक्षि स (fol. 64*a*) खीर्न पश्यसि न चाप्युक्ता ददा
स्युत्तरं
नो वेत्सीदृशमत्र नेदृशमिमां शून्यामवस्थां गता।
तल्पादस्थिकरङ्कपञ्जरमिदं जीवेन लिप्तं मना
ग्मुञ्चन्ती किमु कर्तुमिच्छसि कुरु[1] प्रेमान्य†दिशागते†[2]॥

वल्लणस्य॥

---

४५९ [1] *Viddhaś.* °लतर. [2] *Viddhaś.* also कर्ण. [3] MS. ङ्कः.
४६० [1] MS. श्रा. [2] *Skm.* चूर्णी. [3] MS. ना. [4] MS. यू.
[5] *Skm.* °मित. [6] MS. नै (corrected ?). [7] *Skm.* also क्रो.
[8] *Skm.* ह. [9] *Viddhaś.*, *Skm.* सार.
४६१ [1] MS. here erases ते. [2] *Sic* or °ने? Read °द्वेषा गतिः?

४६२

*Skm. III. 29.

किं वातेन विलङ्घिता न न[1] महाभूतार्दिता किं न न
भ्रान्ता[2] किं न[3] न संनिपातलहरीप्रच्छादिता किं न न।
तत्किं रोदिति[4] मुह्यति श्वसिति किं[5] स्मेरं च धत्ते मुखं
दृष्टः किं कथयाम्यकारणरिपुः[6] श्रीभोज्यदेवो[7] ऽनया ॥

छित्तपस्य[8] ॥

४६३

*Skm. II. 121 (अमरसिंहस्य)

कुचौ[1] धत्तः[2] कम्पं निपतति कपोलः करतले
निकामं निश्वासः[3] सरलमलकं ताण्डवयति।
दृशः सामर्थ्यानि स्थगयति मुहुर्बाष्पसलिलं
प्रपञ्चो ऽयं किंचि[4]त्तव सखि हृदिस्थं कथयति ॥

नरसिंहस्य ॥

४६४

त्यजसि न शयनीयं नेक्षसे स्वामवस्थां
विघटयसि न केशानाकुलग्रन्थिबन्धान्।
किमपि सखि कुरु त्वं देहयात्रानुरूपं
शतमिह विरहिण्यो[1] नेदृशं क्वापि दृष्टम् ॥

---

४६२ [1] MS. न altered from च? [2] Skm. भ्रा. [3] Skm. नु. [4] MS. दि. [5] Skm. मुह्यति रोदिति श्वसिति च. [6] Skm. also (A.) °मथ. [7] Sic MS.; cf. 419. [8] MS. य.

४६३ [1] MS. चौ. [2] MS. त्त. [3] Sic MS. (श्वि) and Skm.; see critical note 2 to 377. [4] Skm. also क. [5] Sic MS. (for कं?).

४६४ [1] MS. °हरि.

॥ विरहिव्रज्या ॥

४६५

गमनमलसं शून्या दृष्टिः श[रीर[1]]मसौष्ठवं
श्वसितमधिकं [किं[2]]त्वे[3]तत्स्यात्किमन्यदतो ऽथ वा[4] ।
भ्रमं[5]ति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

For reff. see below.

४६६

वारं वारं तिरयति[1] दृशोरुद्गमं[2] बाष्पपूर
स्तत्संकल्पोपहितजडिम स्त[म्भ[3]]मभ्येति गा[4]त्रम् ।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥

*Mālatīm.* I. 34. *Sarasvatīk. ad* II. 157 (anon.). *At.* p. 58 (anon.). **Rasavilāsa* § 16 (anon.).

४६७

उन्मी (fol. 64*b*) लन्मुकुलकरालकुन्दकोष[1]
प्रश्चोतद्घनमकरन्दगन्धगर्भैः[2] ।
तामीषत्प्र[3]चलं[4]विलोचनां नताङ्गी
मालिङ्गन् पवन मम स्पृशाङ्गमङ्गम् ॥

*Mālatīm.* I. 37.

---

४६५ *Mālatīm.* I. 16. *Daśar. ad* II. 47 (*Mālatīm.*). *Sāhityad.* p. 167 (*Mālatīm.*). **Sml. P.* 64*b* (भवभूतेः). **Sml. B.* 70*b* (भवभूतेः). [1] Two akṣaras lost. [2] Akṣara omitted. [3] *Sāhityad.* त्वि ; *Mālatīm.* also त्वे ; *Sml. P.* द्वे. [4] *Sml. P.* °न्यथा. [5] *Sml. P.* भव.

४६६ [1] These eight akṣaras are partly lost in the MS. [2] *At.* सुधावुद्गतो ; so *Rasavilāsa.* [3] Akṣara omitted. [4] MS. ग्रा.

४६७ [1] *Mālatīm.* शृ. [2] *Mālatīm.* °बन्धः. [3] MS. °गीषप्रे. [4] *Mālatīm.* also °ज्वलित.

४६८

*For reff. see below.*

दलति हृदयं[1] गाढोद्वेगं[2] द्विधा न तु[3] भिद्यते
वहति विकलः कायो मोहं[5] न मुञ्चति चेतनाम्।
ज्वलयति[6] तनूमन्तर्दाहः करोति न भस्मसा
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥

४६९

*Skm. iv. 217 (केशटस्य)

नादत्से हरिताङ्कुरान् क्वचिदपि स्थैर्यं[1] न यन्नाहसे
यत्पर्याकुललोचनो ऽसि करुणं कूजन्दिशः पश्यसि।
दैवेनान्तरितप्रियो ऽसि हरिण त्वं चापि किं यच्चिरं[3]
प्रत्यद्रि प्रतिकन्दरं[4] प्रतिनदि प्रत्यूषरं भ्राम्य[5][6][सि[7]]॥

४७०

*Bālar. v. 51.*

कस्राघातैः सुरभिरभितः सत्वरं ताडनीयो
गाढम्रिडं[3] मलयमरुतः शृङ्खलादाम दत्त।
कारागारे क्षिपत तरसा पञ्चमं रागराजं
चन्द्रं[4] चूर्णीकुरुतं[5] च शिलापट्टके पिष्टपेषम्[6]॥

---

४६८ *Mālatīm.* ix. 11. *Uttararāmac.* iii. 31. **Sml. P.* 67b. **Sml. B.* 75b. *Sāhityad.* p. 159 (*Mālatīm.*). *Sarasvatīk.* ad v. 169 (anon.). **Padyār.* 321 (भूपतेः, margin भवभूतेः). **S.-Hārāv.* C. 458. [1] MS. य. [2] *Uttarar.* गो; *S.-Hārāv.* गं; *Sml. P.* ०त्काण्ठं. [3] *Uttarar.* (one ed.) शोकाद्वेगाद्द्विधा तु न; *Padyār.* कामः कामं द्विधा न तु; *S.-Hārāv.* also has तु न. [4] *Mālatīm.* also भज्य. [5] *Padyār.* मूर्छां. [6] MS. here inserts च; *Sarasvatīk.* has ज्वलति च. [7] *Sml. P.* स.

४६९ [1] MS. र्यं. [2] MS. कूजन्नरि. [3] *Skm.* च्चामो ऽसि यत्प्रत्यहं. [4] *Skm.* ०काननं. [5] MS. भा. [6] *Skm.* धाव. [7] Akṣara lost.

४७० [1] For ०स्रा in sense of ०घ्रा? MS. स्रा? *Bālar.* म्पा. [2] MS. डा. [3] *Bālar.* ०क्रान्त. [4] MS. न्द्र. [5] MS. व्र. [6] MS. सं; *Bālar.* ०बिम्बं.

४७१

ह्रिया संसक्ताङ्गं तदनु मदनाज्ञाप्रशिथिलं
सनाथं माञ्जिष्ठप्रसरकृशरेखैर्नखपदैः ।
घनोरुप्राग्भारं निधिमुखमिवामुद्रितमहो
कदा नु द्रक्ष्यामो विगलितदुकूलं मृगदृशः ॥

चितीशस्य ॥

४७२

*Skm. II. 498.

एते चूतमहीरुहो ऽप्यविरलैर्धूमायिताः षट्पदै
रेते ऽपि ज्वलिताः स्फुटत्किसलयोद्भेदैरशोकद्रुमाः ।
एते किंशुकशाखिनो ऽपि मलिनैरङ्गारिताः कुड्मलैः
कष्टं विश्रमयामि कुत्र नयने सर्वत्र वामो विधिः ॥

वाक्कूटस्य ॥

४७३

For reff. see below.

सव्याधेः[1] कृशता क्षतस्य रुधिरं दष्टस्य लालास्रवः[2]
सर्वं नैतदि[3][हास्ति तत्कथमयं[4] पान्थस्तपस्वी मृतः ।
आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥

---

४७१ [1] MS. वी.

४७२ [1] *Skm.* प्र.

४७३ **Skm.* II. 430 (राजशेखरस्य). *Śp.* 3822 (रामिलसोमिलयोः). **Sml. B.* 113*b* (रामिलसोमिलयोः). **Sabhyāl.* 27*b* (रामिलसोमिलयोः). **S.-Saṃcaya*, xx. 4 (anon.). [1] MS. धेः. [2] *Skm.* also °स्रवः; *Śp.* °स्रुतिः; *Subhās.* °स्रुतिः. [3] These five akṣaras partly obliterated in MS.; the rest lost with fols. 65-6. I give as far as 475*a* the readings of *Skm.* *Śp.* and *Sabhyāl.* read किंचिन्न°; *S.-Saṃcaya* नैतत्किंचि°, continuing unmetrically °दिहास्ति कोऽप्ययं पान्था वराको. [4] *Śp.*, *Sabhyāl.* सौ.

४७४

*Skm. II. 460 (कस्यचित्).

स्खलल्लीलालापं विनिपतितकर्णोत्प] (fol. 67a) लदलं
श्रमस्वेदक्लिन्नं सुरतविरतिक्षा[1]मनयनम्[2]।
कचा[3]कर्षक्रीडासरलकुरलश्रेणिसुभगं
कदा तद्द्र[4]ष्टव्यं वदनमवदातं मृगदृशः ॥

४७५

Sbhv. 1701 (कस्यापि).

अहमिव शून्यमरण्यं वयमि[1]व तनुतां गता[2]नि तोया[3]नि।
अस्माकमिवोच्छ्वासा दिवसा दीर्घाश्च तप्ताश्च ॥

४७६

For reff. see below.

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्ण[1]रूपेव च[1]
प्रत्युप्तेव च वज्रलेप[2]घटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव [वि[3]]शिखैश्चेतोभुवः पञ्चभि
श्चिन्तासंतति[4]तन्तुजालनिविडस्यूतेव लग्ना प्रिया ॥

४७७

नेत्रेन्दीवरिणी मुखाम्बुरुहिणी भ्रूवल्लिकल्लो[1]लिनी
बाहु[2]द्वन्द्वमृणालिनी यदि वधूर्वापी पुनः[3] सा भवेत्।
तल्लावण्यजलावगाहनजडै[4]रङ्गैरनङ्गानल
ज्वालाजालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥

---

४७४ [1] MS. स्का. [2] MS. ०यन. [3] MS. ता or डा? [4] MS. हृ.

४७५ [1] MS. मे (*mi*). [2] Four akṣaras partly lost. [3] *Sbhv.* सलिलानि.

४७६ *Mālatīm.* v. 10. *Daśar. ad* IV. 19 (*Mālatīm.*). *Sarasvatīk. ad* II. 104 (anon.), *ad* IV. 51 (anon.). *At.* p. 58 (anon.). **S.-Hārāv.* C. 324 (anon.). [1] *S.-Hārāv.* वा. [2] *Daśar.*, *S.-Hārāv.* ०सार. [3] Akṣara omitted. [4] MS. सन्त (corrected from न्ति)ते (*ti*).

४७७ [1] MS. सौ. [2] MS. द्व. [3] MS. प्रलः. [4] MS. वै (?).

४७८

प्रहतो क्वानङ्गः स च कुसुमधन्वाल्पविशिख
श्चलं सूक्ष्मं लक्ष्यं[3] व्यवहितममूर्तं क्व[4] च मनः।
इतीमामु[5]द्भूतां स्फुटमनुपपत्तिं मनसि मे
रुजामाविर्भावादनुभवविरो[6]धः शमयति ॥

वन्द्यतथागतस्य ॥

*Skm. ii. 151 (मृगराजस्य).

४७९

अन्तर्निबद्धगुरुमन्युपरंपराभि
रिच्छोचितं किमपि वक्तुमशक्नुवत्याः।
अव्यक्तहूंकृतिचलत्कुचमण्डलाया
स्तस्याः स्मरामि मुहु . . विलोकितानि ॥

४८०

भ्र[1]स्यद्विवक्षितमसंफल[2]दक्षरार्थ
मुत्कम्पमानदशनच्छदमुच्छ्वसत्या[3]।
अद्य स्मरामि परिमृज्य पटाञ्[4]चलेन
नेत्रे तया किमपि यत्पुनरुक्तमुक्तम् ॥

(fol. 67b) सोंन्नोकस्य ॥

*Skm. ii. 459 (सोन्नोकस्य).

४७८ [1] These four akṣaras partly lost. [2] *Skm.* °चापो; MS. °वन्वाऽ. [3] MS. च्छं. [4] *Skm.* also (A.) क. [5] MS. सु. [6] *Skm.* also (B.) बो.

४७९ [1] MS. न्य. [2] MS. द्र. [3] MS. कि; the two lost akṣaras may have been रर्धं.

४८० [1] *Skm.* श्य. [2] *Skm.* °पस्खलद् and (A. var. lect.) °संबद्ध; read °संवलद्? [3] *Skm.* °न्त्या and (margin, first hand) यो. [4] *Skm.* ञ्ज. [5] One akṣara partly lost in MS.

४८१

दग्धप्ररूढमदनद्रुममञ्जरीति
लावण्यपङ्कपटलोन्नतपद्मिनीति[1]।
शीतांशुबिम्बगलि[2]तामृतनिर्मितेति
बालाक्ष[3]वालहरिणाङ्कमुखीं स्मरामि ॥

४८२

मधूद्गारस्मेरभ्रमरभरहूंकारमुखरं
शरं साक्षान्मीनध्वजविजयचापच्युतमिव ।
निलीयान्योन्यस्मिन्नुपरि सहकाराङ्कुरममी
समीक्षन्ते पक्ष्मान्तरतरलतारा विरहिणः ॥

४८३

सा न चेन्मृगशावाक्षी किमन्यासां कथाव्ययः[1]।
कला न यदि शीतांशोरम्बरे कति तारकाः ॥

४८४

For reff. see below.

उपरि घनं घनपटलं दूरे कान्ता तदे[1]तदापतितम् ।
हिमवति दिव्यौ[2]षधयः क्रोधा[3]विष्टः फणी शिरसि[4] ॥

४८१ [1] MS. ते (ti). [2] MS. ले (li). [3] *Sic* MS. (for भ्र? *see* Exegetical Notes).

४८३ [1] MS. पः.

४८४ Bhartṛhari, I. 43. *Sbhv.* 1744 (भर्तृहरेः). **Sml. B.* 121*a* (भर्तृहरेः). *Śp.* 3886 (कस्यापि). *Sarasvatīk.* *ad* III. 31 (anon.). Hemac. p. 252 (anon.). **S.-Ratnak.* III. 322–3 (anon.). **S.-Mukt.* VI. 67 (anon.). [1] Hemac. दयिता°; *Sarasvatīk.* दयिता किमे; the other texts have तिर्यग्गिरयोऽपि नर्तितमयूराः and दूरे कान्ता (*Śp.* बाला, *S.-Ratnak.* वनिता), etc., as the second pāda of a verse beginning उपरि पयोधरमाला. [2] MS. व्यो. [3] *Śp.*, *Sarasvatīk.*, *S.-Ratnak.*, Hemac. कोपा. [4] *Sbhv.*, *Śp.*, *S.-Ratnak.*, *S.-Mukt.*, Bhartṛhari read this line क्षितिरपि (or वसुधा) कन्दलधवला दृ(or तु) ष्टिं पथिकः क्व पातयतु.

४८५

स्थगितं नवाम्बुवाहैरुत्तानास्यो विलोकयन् व्योम ।
संक्रमयतीव पथिकस्तज्जलनिवहं स्वलोचनयोः ॥

जयीकस्य[1] ॥

४८६

ते जङ्घे जघनं च तत्तदुदरं तौ च स्तनौ तत्स्मितं
सूक्तिः सा च तदीक्षणोत्पलयुगं धम्मिल्लभारः स च ।
लावण्यामृतबिन्दुवर्षि वदनं तच्चैवमेणीदृश
स्तस्यास्तद्वयमेकमेवमसकृद्ध्यायन्त एवास्महे ॥

नरसिंहस्य ॥

४८७

यदि शशधरस्त्वद्वक्त्रेण प्रसह्य तिरस्कृत
स्तदयमदयो मह्यं मुग्धे किमेवमसूयति ।
यदमृतरसासारस्निग्धैर्धिनोत्यखिलं जग
ज्ज्वलयति तु मामेभिर्वह्निच्छटाकटुभिः करैः ॥

परमेश्वरस्य ॥

४८८

लीलाताण्डवितभ्रुवः[1] स्मितसुधाप्रस्यन्दभाजो दल
[न्नीलाब्जद्युति] (fol. 68a) निर्भरा दरवलत्पक्ष्मावलीचारवः ।
प्राप्तास्तस्य वियोगिनः स्मृतिपथं खेदं समातन्वते
प्रेमार्द्राः सुदृशो विकुञ्चनततिप्रेङ्खत्कटाक्षा दृशः ॥

---

४८५ [1] Two akṣaras partly lost and uncertain.

४८७ [1] MS. ह्नि (*hni*).

४८८ [1] So begins *Damayantīkathā*, VII. 41. [2] Five akṣaras partly or wholly lost. [3] MS. °राद्रवलयेच्चा. [4] MS. च.

४८९

विस्फारायास्तरलत[1] . . . . विस्फुरन्त
स्तासां तासां नयनमसकृन्नैपुणाद्वञ्चयित्वा ।
मुक्तास्तन्व्या मसृणपरुषा[स्ते[2]]कटाक्षक्षुरप्रा
श्छिन्नं छिन्नं हृदयमदयैश्छिद्यते ऽद्यापि . .[3] ॥

[पर[4]]मेश्वरस्य ॥

४९०

*For reff. see below.*

श्यामां[1] श्यामलिमानमानयत भोः सान्द्रैर्मसीकूर्चकै[2]
स्तन्त्रं मन्त्रमथ[3] प्रयुज्य हरत श्वेतोत्पलानां स्मितम्[4] ।
चन्द्रं चूर्णयत क्षणाच्च[5] कणशः [कृत्वा शिला[6]]पट्टके
येन द्रष्टुमहं क्षमे[7] दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

४९१

*Viddhaś.* II. 1.

तस्मिन्[1] पञ्चशरे स्मरे भगवता भर्गेण[2] भस्मीकृते
जानाम्यक्षय[साय[3]]कं कमलभूः कामान्तरं नि[र्ममे[4] ।]
यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभि
र्जातं मे विदलत्कदम्बमुकुलस्पर्शोपमानं[5] मनः ॥

---

४८९ [1] त uncertain; the following five akṣaras (रलैरंशुभि ? °रश्मिभि ?) are lost. [2] Doubtful restoration of one akṣara omitted in MS. [3] Two akṣaras lost (यैर्मे or यैर्नः ?). [4] Two akṣaras lost.

४९० *Viddhaś.* III. 1. *Sml. P. 67b* (राजशेखरस्य). **S.-Hārāv.* C. 452 (कस्यापि). Hemac. p. 193 (anon.). *Kāvyaprad. ad* VII. 9 (anon.). [1] *Viddhaś.* (some MSS.), *Sml. P.*, *S.-Hārāv.* ज्योत्स्नां (°त्स्नी). [2] MS. र्वै. [3] *Viddhaś.* (some MSS.), *Sml. P.*, *S.-Hārāv.* Hemac. मन्त्रं तन्त्र. [4] *S.-Hārāv.*, *Kāvyaprad.* श्रियं. [5] *Sml. P.* °णेन. [6] Four akṣaras lost in MS., the first having probably been कृ. [7] Hemac. मो.

४९१ [1] MS. स्मि (*smi*). [2] MS. र्ग्गे. [3] Two akṣaras omitted. [4] Two akṣaras lost. [5] MS. य.

४९२

सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभे सो[दरौ¹]
सौहार्दं कुमुदाकरे च² किरणाः पीयूषधाराकिरः।
स्पर्धा ते वदनाब्जजैर्मृगदृशां तत्स्थाणुचूडामणे
हंहो चन्द्र कथं निषिञ्चसि मयि ज्वालामुचो [वेदना]⁴॥

Viddhaś. III. 13. *Skm. II. 508 (कस्यचित्). *Sabhyāl. B.2a (राजशेखरस्य)

४९३

अपि पिबत चकोराः कृत्स्नमुन्नामिकण्ठ¹
क्रमसरलितचञ्चञ्चञ्चवश्चन्द्रिकाम्भः³।
विरहविधुरितानां जीवितत्राणहेतो⁴
र्भवति हरिणलक्ष्मा येन तेजोद[रिद्रः⁶] ॥

Viddhaś. III. 15. Bālar. V. 73.

४९४

(f. 68b) [शी]तांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं
हाराः क्षारपयोभुवः प्रियसुहृत्पङ्केरुहं भास्वतः।
इत्येषां किमिवास्तु हन्त मदनज्योतिर्विघाताय य⁵
ड्वाख्याकारपरिभ्रमेण तु वयं तस्त्वत्य[जो व⁶]ञ्चिताः॥

Viddhaś. III. 19.

---

४९२ ¹ Two akṣaras lost. ² *Viddhaś., Skm., Sabhyāl.* च. ³ *Viddhaś., Sabhyāl.* नु सि; *Skm.* नु सु. ⁴ So *Skm.*; *Viddhaś., Sabhyāl.* रोचिषः; in the MS. a part of वे seems to be traceable.

४९३ ¹ *Viddhaś.* क्रत्स्नमुन्नाम्य कण्ठं or नित्यमुन्नाम°. ² *Viddhaś., Bālar.* °कवलन. ³ *Bālar.* °चन्द्रकान्तीरमिश्राः. ⁴ MS. वे (*vi*). ⁵ These two akṣaras, as well as the following र्भ, are partly lost in the MS. ⁶ Two akṣaras lost.

४९४ ¹ One akṣara wholly, and one partly lost. ² MS. °र्वषत्सा. ³ *Viddhaś.* also सु. ⁴ *Viddhaś.* °वस्तु; MS. हन्तु. ⁵ Five akṣaras partly lost. ⁶ Two akṣaras lost.

४९५

*Viddhaś.* III. 20

व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते
मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः ।
कुसुमशयनं कामास्त्राणां करोति सहायतां
द्विगुणगरिमा . . न्माथः[1] कथं नु विरंस्यति ॥

राजशेखरस्यैते ॥

४९६

*Sbhv.* 1087 (बाणकवेः). Amaru, 134. *Aucityav.* ad 14 (भट्टबाणस्य).

हारो जलार्द्रशयनं[1] नलिनीदलानि
प्रालेयशीकरमुचस्तुहिना[2]द्रिवाताः[3] ।
यस्येन्धनानि सरसान्यपि[4] चन्दनानि[5]
[निर्वा][6]णमेष्यति कथं स मनोभवाग्निः ॥

४९७

*Viddhaś.* II. 3.

मन्दादरः कुसुमपत्त्रिषु पेलवेषु
नूनं विभर्ति मदनः पवनास्त्रमद्य[1] ।
हारप्रकाण्डशरलाः कथमन्यथामी[2]
श्वासाः[प्रनर्तित[3]]दुकूलदशाः सरन्ति ॥

---

४९५ [1] *Viddhaś.* कामोन्मा; MS. मा ऽ . . न्मा (for मानङ्गोन्मा?).

४९६ [1] *Sbhv.*, Amaru, *Aucityav.* वस. [2] MS. णा. [3] *Sbhv.* °श्च हिमांशुभासः; Amaru, *Aucityav.* °स्तुहिनांशुभासः. [4] *Sbhv.*, Amaru, *Aucityav.* °सानि च. [5] This akṣara is partly lost in MS. [6] These two akṣaras are lost in MS.

४९७ [1] MS. °यन्ति. [2] MS. मा. [3] Four akṣaras lost.

४९८

अकृतप्रेमैव वरं न पुनः संजातविघटितप्रेमा ।
उद्धृतनयनस्ताम्यति यथा हि न तथेह[3] जातान्धः[4] ॥

*For reff. see below.*

४९९

स्वप्न प्रसीद भगवन् पुन[रेकवारं
सं[1]]दर्शय प्रियतमां क्षणमात्रमेव ।
दृष्टा[2] सती निविडबाहुनिबन्धलग्नं
तत्रैव मां नयति सा यदि वा न याति ॥

**Skm.* II. 473 (कालिदासस्य).

---

४९८ *Sbhv.* 1389 (रविगुप्तस्य). *Bhojapr.* 136 (Pavie, p. 38, anon.). [1] MS. here inserts च. [2] *Sbhv.* विघ्नित. [3] *Sbhv.* °नो हि यथा ताम्यत्येवं न. [4] For this verse *Bhojapr.* has (1) (Pavie):

अकृतस्नेहो हि वरं न वरं स जात(*sic*)विघट्टितस्नेहः ।
उद्धृतनयनस्ताम्यति यथा न तथा(*sic*) जात्यन्धः ॥

(2) (Bomb. 1886, Calc. 1883):

स्नेहो हि वरमघटितो न वरं संजातविघटितः स्नेहः ।
हृतनयनो हि विषादी न विषादी भवति जात्यन्धः ॥

४९९ [1] MS. षी ; the five akṣaras रे . . . स[न्दर्श] are lost. [2] *Skm.* also (B.) दृष्ट्वा. [3] *Skm.* omits निबन्ध. [4] *Skm.* A. omits सा.

## ॥ असतीव्रज्या ॥

५००

*For reff. see below.*

दृष्टिं हे प्रतिवे[शिनि क्षण[1]]मिहाप्यस्मद्गृहे दास्यसि
प्रायो नैवं[2] शिशोः पिताद्य विरसाः[3] कौपीरपः पा[4]स्यति ।
एका[5]किन्यपि यामि तदं[6]रमितः स्रोतस्त[7]मालाकुलं
नीरन्ध्राः स्तनं[8]मा[लिखन्तु जठ] (fol. 69*a*) रै[9]च्छेदा नल-
ग्रन्थयः ॥

विद्यायाः[10] ॥

५०१

*Dhvanyāl. ad* II. 6 (anon.).

तेषां गोपि[1]वधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दराजं[2]तनयातीरे लतावेश्मनाम् ।
वि[3]च्छिन्ने स्मरतं[4]ल्पकल्पनविधिं[5]च्छेदोप[योगे ऽधुना[6]]
ते जाने जरठीभवन्ति विगलं[7]न्नीलत्विषः पल्लवाः ॥

---

५०० *Skm. II. 66. *Śp.* 3769 (विज्जकायाः). *Sāhityad.* p. 103 (anon.). *Daśar. ad* II. 19 (anon.). *Sarasvatīk. ad* I. 86 (anon.). *Aś. ad* VIII. 1 (anon.). *At.* p. 62 (anon.). **Sabhyāl.* III. 9 (anon.). Hemac. p. 35 (anon.). [1] Four akṣaras lost. [2] Hemac. नास्य; all other texts have प्रायेणास्य. [3] MS. मा: (?). [4] MS. °यः या. [5] MS. here inserts ८ twice. [6] *Skm.*, *Sāhityad.*, *Śp.* सत्व. [7] MS. स्तु. [8] All other texts have °ध्रास्तनु, except *At.* and Hemac., which have °ध्राः पुनरा°. [9] Five akṣaras lost; all other texts have जरठ; but जठर is an alternative, and in the required sense more correct, form of the word; cf. 66*d* and 427*d* above. [10] The MS. joins this to the following verse तेषां . . .

५०१ [1] Corrected from गौ. [2] *Dhvanyāl.* °शैल. [3] MS. वे (*ri*). [4] MS. here erases क. [5] *Dhvanyāl.* °मृदु. [6] Four akṣaras here lost. [7] Corrected from लि.

५०२

सिकतिलतलाः सान्द्रच्छायास्तटान्तविलम्बिनः
शिशिरमरुतां लीलावासाः क्वणज्जलरङ्कवः।
अवि[नयव[1]]तीनिर्विच्छेदस्मरव्ययदायिनः
कथय मुरले केनामी ते कृता निचुलद्रुमाः[2] ॥

*Skm. II. 56 (विद्यायाः).

५०३

पान्थ स्वैरगतिं विहाय झटिति प्रस्थानमारभ्यता
मत्यन्तं करिसूकराहिगवयैर्भीमं[1] पुरः काननम्[2]।
चण्डांशोरपि रश्मयः प्रतिदिशं[3] म्लानास्त्वमेको युवा
स्थानं नास्ति गृहे ममापि भवतो बालाहमेकाकिनी ॥

*Skm. II. 75 (कस्यचित्).
*S.-Mukt. III. 61 (anon.).

५०४

विटपिनि[1] शिशिरच्छाये क्षणमिह विश्रम्य गम्यतां पथिकाः।
अतरुरवारितःपरमसमशिलादुर्गमो मार्गः ॥

५०५

अम्बा शेते ऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथेह[4]।

For reff. see below.

---

५०२ [1] Three akṣaras lost. [2] MS. लं.

५०३ [1] These three akṣaras are partly lost. [2] MS. कानन. [3] S.-Mukt. नं.

५०४ [1] MS. ने (ni).

५०५ *Skm. II. 73 (भट्टस्य). Sbhv. 2247 (रुद्रटस्य). *Sml. P. 126b (रुद्रस्य). Dhvanyāl. ad II. 26 (anon.). Rasagaṅg. p. 415 (anon.). Citrakh. p. 32 (anon.). [1] Sml. P. °रेष. [2] Akṣara partly lost. [3] Skm. गर्भे. [4] Skm., Dhvanyāl., Rasag., Citrakh., Sml. P. °थात्र; Sbhv. °थाहं.

अस्मिन् पापाहमेका[3] कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं युवत्या[4] कथितमभिमतं[5] व्याहृतिव्याजपूर्वम् ॥

५०६

स्मरविवशया किंचिन्मिथ्यानिषेधमनोज्ञया
दिशि दिशि तया भूयो भूयः प्रवर्तितनेत्रया ।
कुवलयदृशा शून्ये दैवादतर्कितलब्धया
निभृतपरि[3] . . . (fol. 69b). . . ॥

५०७

Sarasvatīk. ad v. 169 (anon.).

व्य[1]पेतव्यापा[2]रं ग[3]तविविधशिल्पव्यतिकरं
करस्पर्शारम्भ[4]प्रगलि[5]तदुकूलान्तशयनम् ।
मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुः[6] प्रेषि[7]तदृशो
रहस्यां[8][सुचाम्णोः क्षणिकमिह तत्संगतमभूत् ॥
. ][9]श्वरस्य ॥

---

५०५ [1] *Skm.* also (A.) य. [2] MS. कां; *Sbhv.* reads पापा निकेते. [3] These four akṣaras are partly lost. [4] *Sbhv.*, *Dhvanyāl.*, *Citrakh.*, *Rasag.* तरुण्या. [5] *Sbhv.* °मवसथ; *Dhvanyāl.*, *Citrakh.*, *Rasag.*, *Sml. P.* °मवसर.

५०६ [1] Akṣara lost. [2] Two akṣaras imperfect and reading not certain. [3] Imperfect akṣaras (या . . .); reading doubtful; MS. निभृतंयेर.

५०७ [1] *Sarasvatīk.* त्र. [2] *Sarasvatīk.* हा. [3] *Sarasvatīk.* च्यु. [4] *Sarasvatīk.* म्भे. [5] MS. ले (*li*). [6] Two akṣaras partly lost. [7] *Sarasvatīk.* रि. [8] MS. ज्ञा. [9] Akṣaras almost entirely lost; the MS. reads सू चाम्णोः for सु°. Author योगेश्वर or परमे°?

५०८

य: कौमारहर: स एव हि वरस्ताश्चन्द्रगर्भा[3] निशा:
प्रोन्मीलन्नवमाधवीसुरभयस्ते[6] ते च[7] विन्ध्यानिला: ।
सा चैवास्मि[8] तथापि चौर्यसुरतव्यापारलीलाभृतां[10]
किं मे[11] रोधसि वेतसीवनभुवां[12] चेत: समुत्कण्ठते ॥

For reff. see below.

५०९

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको[1] वसति यत्र जन: प्रियो मे ।

For reff. see below.

---

५०८ *Skm. II. 58 (कस्यचित्). Śp. 3768 (शीलाभट्टारिकाया:). *Sml. P. 126a (शीलाभट्टारिकाया:). *Padyāv. 378 (कस्यचित्). Kāvyapr. ad I. 4 (anon.). Kāvyaprad. ad I. 4 (anon.). Sāhityad. p. 70 (anon.). As. pp. 127 and 200 (anon.). Ak. p. 336 (anon.). *Sabhyāl. III. 5 (anon.). *S.-Hārāv. C. 278 (शीलाया:). *S.-Prab. 82 (anon.). [1] MS. च; Sml. P. रह. [2] MS. च. [3] MS. here inserts निभ; the other texts (except Sml. P.) have ता एव चै(Sabhyāl. चा)त्रक्षपा:. [4] MS. नै (ni). [5] Skm. °लती. [6] Three akṣaras partly lost. [7] MS. र; [8] read ते चैव. The other texts have ते चोन्मीलितमालतीसुरभय: प्रौढा: कदम्बानिला: (Sabhyāl. °वाता: सचन्द्रा: क्षपा:, S.-Hārāv. परिमला मंदा:°); but Sml. P. प्रोन्मीलन्नव°. [8] MS. °स्मि (smi). [9] So Skm., Sml. P., S.-Hārāv.; MS. वैर्य; the other texts have तत्र. [10] So Skm.; the other texts read °विधौ. [11] The other texts have रेवा; MS. किंम्मे or °स्मि? [12] Sbhv., Padyāv., Kāvyapr., Kāvyaprad., As., Sml. P., Sabhyāl., Sāhityad., S.-Hārāv., S.-Prab. °तरुतले.

५०९ Sbhv. 1946 (अमरुकस्य). Śp. 3610 (गोविन्दस्वामिनो विकटनितम्बायाश्च). Amaru, 71. Vetālap. (ed. Uhle), p. 27. Sarasvatīk. ad II. 144 (anon.). *Sabhyāl. III. 63. *S.-Prab. 73 (anon.). [1] Sarasvatīk., S.-Prab. °णेश्वरो; so Vetālap., some MSS., others °णाधिको (Sabhyāl. °पो); S.-Ratnak. has भवति for वसति. [2] Sbhv. निज:; Śp., Vetālap., Sarasvatīk., S.-Prab. मन:; one MS. of Vetālap. has जनप्रिया.

